# CONTENTS.


| | | | Page. |
|---|---|---|---|
| 1. | Simanthini Charitram | ... | 1 |
| 2. | Yajnavalkya Charitram | ... | 2 |
| 3. | Amsumati Vivaha | ... | 18 |
| 4. | Rukmini Kalyanam | ... | 23 |
| 5. | Pradyumna Charitram | ... | 32 |
| 6. | Syamantakopakhyanam | ... | 36 |
| 7. | Narakasuravadha | ... | 40 |
| 8. | Parijatapaharanam | ... | 42 |
| 9. | Kuchelopakhyanam | ... | 48 |
| 10. | Parikshit Charitram | ... | 52 |
| 11. | Gajendramoksha | ... | 57 |
| 12. | Dhruva Charitram | ... | 59 |
| 13. | Amrutamathanam | ... | 63 |
| 14. | Parvati and Paramesvara | ... | 67 |
| 15. | Ganesha | ... | 68 |
| 16. | Subrahmanya | ... | ,, |
| 17. | Hanuman | ... | 69 |
| 18. | V Canto of Kumarasambhavam | ... | 72 |

॥ श्रीः ॥

# मध्वविलासपुस्तकालयः ।



पण्डित टी. आर्. कृष्णाचार्यः. टी. के. वेंकोबाचार्यः

प्रोप्रैटर्. म्यानेजर्.

SRI GOPALA VILASA PRESS, KUMBAKONAM.

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# संस्कृत तृतीयपाठः ॥ ३ ॥

## सीमन्तिनी चरित्रम्।

आसीदार्यावर्ते चित्रवर्मा नाम महाराजः। शास्ता दुरात्मनां, रक्षिता सताम्, उद्धर्ता दीनानां, शरण्यः शरणमिच्छताम्, आहर्ता यागानां, सेवको ब्राह्मणानां, मन्मथो निजभार्याणां, भ्राता परस्त्रीणां स बभूव। बभूवुश्च तस्य भार्या बह्व्यो राजपुत्र्यः। तासु स बहून् अनुरूपान्पुत्रान्प्रपेदे। दौहित्रा वदनावलोकने धृतकौतुकस्य तस्य नैकापि तनयाऽजनि। तदर्थं स राजा पार्वतीपरमेश्वरावाराधितवान्। तयोरनुग्रहेण राज्ञो महिषी गर्भमधारयत्। शुक्लपक्षचन्द्र इव स गर्भो ववृधे। नवमे मासि शुभे दिने शुभे मुहूर्ते सा राज्ञी तनयां प्रासूत। भवान्य अनुग्रहेण जातस्य कन्यारत्नस्य रूपं को नाम वर्णयेत्? द्वादशेऽहनि राजा तस्य शिशोः "सीमन्तिनी" इति नाम चकार।

तदा बहवो ज्योतिर्विदो ब्राह्मणाः तस्या राजपुत्र्या जातकफलं राज्ञेऽवदन्। तेष्वेको ज्यौतिषिकः "इयं कन्या उमेव माङ्गल्यवती, दमयन्तीव सुरूपा, भारतीव कलाभिज्ञा, लक्ष्मीरिव महागुणा भविष्यति। अस्या अष्टौ पुत्राः, एका कन्या च भविष्यन्ति, इयं दशवर्षसहस्राणि भर्त्रा सह

प्रमोदेत" इत्यवदत्। तच्छ्रुत्वा स राजा तं द्विजं संमान्य व्यसर्जयत्। अथ अन्यो ज्योतिर्वित् "एषा चतुर्दशे वर्षे वैधव्यं ध्रुवं प्राप्स्यति" इत्यवदत्। नृपतिस्तस्य वज्रनिर्घात-निष्ठुरं वचनमाकर्ण्य चिन्तया कर्तव्यमूढोऽभवत्। "पुनः सः सर्वं दैवकृतम्, तत्र किं मया कार्यमस्ति? ।" इति निश्चित्य तूष्णीमासीत्।

सा कन्या दशमे वर्ष एव षोडशवर्षदेशीयेव युवतिरासीत्। पठने, लेखने, गीते, वाद्ये च नितरां सा कुशला बभूव। तदानीं सा स्वस्याः चतुर्दशे वर्षे भाव्यं वैधव्यं सखीमुखाद्व्यजानात्। बुद्धिमती सा सीमन्तिनी व्यर्थां चिन्तामकृत्वा आलोचयामास। "पापानां परिहारकाणि प्रायश्चित्तानि धर्मशास्त्रेषु विहितानि। वैधव्यं च पापफलमेव। तस्मादेतत् परिहारकं प्रायश्चित्तं किमपि स्यात्। वृद्धाभ्यस्तज्ज्ञात्वाऽनुतिष्ठामि" इति निश्चित्य अनेकाः पतिव्रता आनाय्य प्रायश्चित्तं पप्रच्छ। ता ऊचुः "भद्रे! न वयं जानीमो वैधव्य-परिहारकं प्रायश्चित्तं, महाप्रभावा पतिव्रताशिरोमणिर्मैत्रेयी नातिदूरे तपोवने वर्तते; तां पृच्छ" इति। सा का? कस्य पत्नी? कीदृशस्तस्याः प्रभावः? इति सीमन्तिन्या पृष्टाः पतिव्रता ऊचुः।

---

## याज्ञवल्क्य चरित्रम्।

---

अस्ति महर्षेर्वेदव्यासस्य शिष्यो यजुर्वेदाध्यायी वैशं-

पायनो नाम महर्षिः। तस्य स्वस्रीयो याज्ञवल्क्य इति। स-चानेकैः सहाध्यायिभिः सह वैशंपायनात् वेदमध्यैत।

अत्रान्तरे महातपस्विनो ब्रह्मज्ञानिनः केचन ऋषयो मिलित्वा "अद्यारभ्य सप्तमे दिवसे सर्वैर्ऋषिभिरेतमाश्रममागत्य ब्रह्मविचारः कर्तव्यः। यः कोऽपि तत्र केनापि कारणेन नागच्छेत्, तस्य ब्रह्महत्यासमं पापं भवेत्" इति परस्परं संधां चक्रुः।

तस्मिन्दिने केनापि महता कारणेन वैशंपायनस्तत्र गन्तुं न पारयामास। तस्मात्तस्य ब्रह्महत्यादोषः समभूत्। तदा स ऋषिः तस्य परिहाराय स्वप्रतिनिधितया तीर्थान्यटितुं शिष्यानाज्ञापयामास। तच्छ्रुत्वा याज्ञवल्क्यो गुरुं प्राह "अह-मेक एव तीर्थाटनं कृत्वा भगवतो ब्रह्महत्यांहो व्यपोहहिष्यामि। किमेतैरल्पसारैः कृत्यम्?" इति। तच्छ्रुत्वा गुरुरवादीत् "याज्ञवल्क्य! यद्यपि त्वं समर्थ इति जाने। तथाऽपि सर्वेभ्यः शिष्येभ्यः सेवा ग्रहीतव्येति सर्वे मयाज्ञप्ताः। यस्मात्त्वं ब्राह्मणानवामनुथास्तस्मादितः परं मन्निकटे स्थातुं त्वं नार्हः। मत् अधीतं वेदं मह्यं प्रत्यर्प्य गच्छ यथेष्टम्" इति।

तदा याज्ञवल्क्यः स्वाधीतं वेदं छर्दयामास। स वेदः अङ्गारा भूत्वा भूमौ पपात। शिष्यमहिम्ना अतिजाज्वल्यमानां तां वेदविद्यां दृष्ट्वा तस्यां लोभेन वैशंपायनः तां ग्रहीतुं शिष्यान् समचोदयत्। ते च तित्तिरिपक्षिणो भूत्वा तानङ्गा-

रानखादन्। तदारभ्य तस्या यजुश्शाखायाः तैत्तिरीयशाखेति नाम समजनि।

याज्ञवल्क्यश्च विद्यया रिक्तम् आत्मानं विलोक्य दुःखितस्सन् जन्मनः सफलीकरणाय यजुर्वेदं पुनरध्येतुं सूर्याभिमुखो भूत्वा तमुद्दिश्य तपश्चकार। तपसा प्रसन्नो दिवाकरः मध्याह्नसमये वाजिरूपं धृत्वा समग्रं यजुर्वेदं, सर्वा विद्याश्च तस्मै उपादिशत्। तत्प्रोक्तायाः शाखायाः मध्याह्ने उपदिष्टत्वात् माध्यंदिनशाखेति, वाजिरूपेण सूर्येणोपदिष्टत्वात् वाजसनेयशाखेति च प्रसिद्धिरभूत्। तदन्तर्गता उपनिषत् बृहदारण्यकम्। भगवतः सूर्यस्यानुग्रहात् याज्ञवल्क्यः शतपथ-ब्राह्मणं चकार।

अत्रान्तरे मिथिलायां जनको नाम महायोगी राजा आसीत्। स वेदान्तविद्याग्रहणाय गुरुं परीक्षितुं ब्राह्मणानां समाजं चकार। तत्र आश्वलः आर्तभागः भुज्युः चाक्रायणः कहोडः उद्दालकः विदग्धशाकल्यः अन्ये च ऋषयः वाचक्नवी-प्रभृतयोऽनेकाः परमहंसिन्यः स्त्रियश्च समागताः।

मैथिलस्तस्याः सभाया मध्ये कांचन सर्वगुणोपेतां द्रोणदुग्धां स्वर्णशृङ्गां रौप्यखुरां सवत्सां गामानीय बबन्ध। तस्याः शृङ्गयोः सुवर्णनिष्कपूर्णे भस्त्रिके अवलम्बिते आस्ताम्। विदेहो राजा गोः समीपं गत्वा "भगवन्तो ब्राह्मणाः!

अवधत्त । युष्मासु यो ब्रह्मवित्तमः स इमां गां गृहं प्रति कालयतु" इत्युवाच ।

तच्छ्रुत्वा तेषु न कोपि आत्मानं ब्रह्मवित्तमं मन्तुमधृष्णोत् । तदा याज्ञवल्क्यः स्वशिष्यमाहूय "सोम्य! इमां गामस्मद्गृहं नीत्वा गोष्ठे बधान" इत्युवाच । तदा क्रुद्धाः सर्वे ब्राह्मणाः तं शिष्यं निरुध्य "यद्ययमस्मत्प्रश्नानामुत्तरं दास्यति तर्हि ब्रह्मवित्तमः । गुरोः ब्रह्मवित्तमत्वनिर्धारणानन्तरं गां नय" इति तमब्रुवन् । ततः सर्वे ब्राह्मणाः वाचक्नवी च एकैकशः, मिलित्वा च पप्रच्छुः । तेषां प्रश्नानां स याज्ञवल्क्यः सदुत्तराण्यदात् । तेन विस्मितास्ते सर्वे "वयं जिताः स्मः । त्वमेव ब्रह्मवित्तमः" इति याज्ञवल्क्यमवदन् । तेषु शाकल्यो नाम कश्चन ऋषिः याज्ञवल्क्यं पराभावयितुमिच्छन् अमार्गेण पूर्वपक्षं चकार । क्रुद्धो याज्ञवल्क्यः त्वं दग्धो भवेति तं शशाप । तेन शापेन तदैव भस्मीभूतं शाकल्यं स ऋषिः कृपया उदजीवयत् । तदारभ्य तस्य विदग्धशाकल्य इति प्रसिद्धिरभूत् ।

जनकराजश्चान्यान्सर्वान्ब्राह्मणान् यथायोग्यं संमान्य तेभ्यः प्रभूतं धनं दत्वा विससर्ज । ततो जनको याज्ञवल्क्यात् वेदान्तमधीतवान् । स राजा अध्ययनान्ते बहुद्रव्यदानेन गुरुपूजां चकार । इत्थं महानुभावः स ऋषिः अनेकासु राजसभासु विजयं प्राप्य द्रव्यनिचयं समचिनोत् ।

अस्य च महामहिम्नः ऋषेर्द्वे भार्ये आस्ताम्। तयोर्ज्येष्ठा भार्या मैत्रेयी। द्वितीया द्वितीया रूपेऽद्वितीया कात्यायनी। स ऋषिः स्वस्य मैत्रेय्याश्च स देहश्चरम इति, स्वेन प्रारब्धं सुखम्, मैत्रेय्या प्रारब्धं दुःखं च अनुभोक्तव्यमिति च ज्ञात्वा कात्यायन्याः परिणयादारभ्य मैत्रेयीमुपैक्षत।

मैत्रेयी चैतद्विदुषी भर्तारं जामातृवत् सपत्नीं पुत्रीवच्च पर्यचरत्। एवं स्थिते पत्युर्गृहीतगर्भा कात्यायनी चन्द्रकान्तं नाम सुतं प्रासूत। मैत्रेयी दंपत्योः शुश्रूषया सह शिशोर्धात्रीकर्म च चकार। कात्यायनी तु पत्या सह केवलं सुखान्येव अन्वभूत्। एवं गच्छति काले महामेघः, विजय इति पुनर्द्वौ पुत्रौ अनुसंवत्सरं जातौ। कस्यचित्कालस्यान्तरं याज्ञवल्क्यस्य ते त्रयोऽपि पुत्रा महादेवं कोपयित्वा तस्य शापात् दण्डकारण्ये खरो दूषणः त्रिशिरा इति नाम्ना राक्षसा बभूवुः। तान् श्रीरामो हत्वा सुगतिमनयत्।

कालेन याज्ञवल्क्यः तत् सुखप्रारब्धं स्वस्य मोक्षमार्गे अन्तरायं ज्ञात्वा स्वयं संन्यस्तुं कात्यायनीमपृच्छत्। सा च इतःपरं पत्या स्वस्याः भवितव्यं किमपि प्रयोजनमपश्यन्ती भर्त्रा आर्जिते द्रव्ये अर्धादपि किंचिदधिकं भागं गृहीत्वा तमन्वजानात्।

ततस्तेन तथैवापृष्टा मैत्रेयी "युवयोः सेवया एतावन्तं कालं सुखेन अनयम्। भगवति प्रव्रजिते कथमहं जीवितं धारयेयम्?" इति सविनयमवादीत्। "मम गृहक्षेत्रवित्तादिषु

अर्धं तुभ्यं ददामि तैस्त्वं सुखेन कालं नयेः" इति स ताम-भाणीत् । "वित्तेन मोक्षस्य मार्गोऽस्ति किम्?; इति मैत्रेय्या पृष्टो याज्ञवल्क्यः "नास्तिवित्तेन अमृतत्वस्य आशा, प्रत्युत तत्तस्य विरोध्यपि भवति" इत्यब्रवीत् । "तर्हि येनाहममृता स्यां तदेव मे ब्रूहि" इति सा तं पप्रच्छ । "एतादृश्यां मोक्षेच्छौ त्वयि भार्यायां स्थितायां कुतोवाऽहं प्रव्रजेयम्? ब्रह्म ते उपदिशामि" इत्युक्त्वा तस्यै ब्रह्मस्वरूपमुपादिश्य तया सह जीवन्मुक्तः पृथिवीं विचरति मुनिः । सोऽपि जीवन्मुक्ता मैत्रेयी अन्तिक एव तपोवने वर्तते । तत्र गत्वा तां पृच्छ । सा तुभ्यं क्षेमं विधास्यति" इति पतिव्रताः सीमन्तिनीमब्रुवन् ।

---

## सीमन्तिन्या मैत्रेयीदर्शनम् ॥

---

एवञ्छ्रुतवती सीमन्तिनी मातुराज्ञया सखीभिः सह अल्पपरिवारेण तपोवनं गत्वा मैत्रेयीं प्रणम्य स्वागमन कारणमकथयत् । "बाले! त्वं पार्वतीपरमेश्वरौ शरणं गच्छ । सोमवारव्रताख्येन उमामहेश्वरव्रतेन तावाराधय । तौ त्वां प्राप्तवैधव्यामपि सधवां कुर्याताम् । आगामिसोमवासरादार-भ्यैव एतद्व्रतमनुतिष्ठ । अत्राश्रद्धां मा कुरु । प्राप्तेऽपि वैधव्ये शोकात् व्रतानुष्ठानं मात्यज । श्रद्धत्स्व मद्वाक्यम् । तेन त्वं दीर्घकालं सुमङ्गला भूयाः । इत्युक्त्वा मैत्रेयी तां विससर्ज । सीमन्तिनी च स्वभवनमागत्य तद्व्रतं महता विभवेनान्वतिष्ठत् ।

---

## सीमन्तिन्या विवाहः ॥

निषधेषु नलो नाम राजाऽऽसीत् । तस्य भार्या वैदर्भी दमयन्ती नाम । तयोः पुत्रः इन्द्रसेनः ।

तस्य सतीष्वप्यनेकासु गृहिणीषु नासीदेकोऽपि वंशकरः सुतः । स पुरोहितैः संमन्त्र्य पुत्रार्थं पुत्रकामेष्टिं चकार । तत्प्रभावेन तस्य ज्येष्ठा पत्नी गर्भिण्यभूत् । नवमे मासि राज्ञी पुत्रं प्रासूत । चन्द्रसंनिभस्य तस्य शिशोः चन्द्राङ्गद इति नाम चकारेन्द्रसेनः । स बालः एकादशे वर्षे पित्रोपनीतः चतुरो वेदान् धनुर्वेदं सर्वाश्च विद्या अधिजगे । अश्वारोहं गजारोहं नौकायात्रां च अभ्यास्यत् । पौरास्तस्य गुणातिशयं दृष्ट्वा नल एवायमित्यमन्यन्त । यौवराज्येऽभिषिक्तः स सर्वानपि शत्रून् वशे चकार ।

चित्रवर्मा पुत्र्या योग्यं वरं तत्रतत्रान्वेषयन् नलस्य पौत्रं गुणशालिनं विज्ञाय पुरोहितम् इन्द्रसेनाय प्रेषयामास । आगतं ब्राह्मणमिन्द्रसेनो विधिवदर्घ्यपाद्यादिभिः पूजयित्वा आगमनकारणं पप्रच्छ । स द्विजः चित्रवर्मणा लिखितां मङ्गलपत्रिकां दत्त्वा कन्याप्रदानवृत्तान्तं स्वमुखेनाप्यकथयत् । तच्छ्रुत्वा प्रहृष्ट इन्द्रसेनः सर्वसीमन्तिनीललामं सीमन्तिनीं स्नुषां करिष्यामीति पत्रिकां विलिख्य तद्धस्ते दत्त्वा भोजनवस्त्रालङ्कारदक्षिणादिभिस्तं यथार्हं सम्भाव्य विससर्ज । पुरोहितो

निषधेभ्यो निवृत्य स्वपुरमागत्य चित्रवर्मणे इन्द्रसेनोक्तं वृत्तान्तं निवेद्य पत्रिकामप्यदात् । महाराजः स्वपुत्र्या विवाहाय शुभं मुहूर्तं निश्चित्य इन्द्रसेनाय पुनर्दूतं प्रेषयामास ।

इन्द्रसेनोऽपि सपुत्रः सान्तःपुरो बन्धुजनसहितः चतुरङ्गया सेनया च युक्तः चित्रवर्मणो नगरं प्रायात् । चित्रवर्मा आगतेभ्यः संबन्धिभ्यो यथार्हमावसथानकल्पयत् । इन्द्रसेनश्च विवाहात्पूर्वेद्युः पुत्रस्य गोदानमङ्गलं निरवर्तयत् । चित्रवर्मा पुण्याहं वाचयित्वा देवतास्समतोषयत् । ततो विवाहदिने, वल्लते शुभे मुहूर्ते चन्द्राङ्गदः सीमन्तिनीं पर्यणयत् ।

तदा ब्राह्मणाः वेदानपठन् । गायका अगायन् । नर्तका अनृत्यन् । स्तुतिपाठका अस्तुवन् । वादका मङ्गलवाद्यान्यवादयन् । कन्यायाः पिता ब्राह्मणेभ्यः स्वर्णनिष्कान् दक्षिणामदात् । गोदानं भूदानं वस्त्रदानं च चकार । गायकादींश्च यथार्हं वस्त्रादिभिः सममानयत् । राजा ब्राह्मणादिभ्यो वर्णेभ्यः षड्रसोपेतं फेणिकापोलिकादिभक्ष्यसहितं स्वाद्वन्नं ददौ । सर्वानपि बन्धून् पूजयित्वा जामात्रे दुहित्रे च पारिबर्हं स्वविभवानुरूपमदात् । एवमष्टौ दिनानि विवाहमहोत्सवः समवर्तत ।

इन्द्रसेनः विंशतिं दिनानि तत्र स्थित्वा स्वदेशं प्रतिष्ठमानः वधूमपि नेतुं चित्रवर्माणमन्वयुङ्क्त । एवं संबन्धिनाऽनुयुक्तश्चित्रवर्मा "जामातैव कांश्चन मासानत्र तिष्ठतु । तदनन्तरं तव स्नुषां पुत्रं च प्रेषयामि" इत्यवादीत् ।

ततः संबन्धिषु गतेषु चित्रवर्मा जामातरं नूतननूतनैः कौतुकैरुपाचरत् । सीमन्तिनी च भर्तारं स्वशीलरूपलावण्यैः गीतवाद्यादिकलाभिः रहस्योपचारैश्च समतोषयत् । चन्द्राङ्गदोऽपि अनलसः स्वाभ्यस्ता विद्याः, रथाश्वगजचर्यां नौकायानं च परिशीलयन् धनुर्विद्यापरिचर्यार्थं कदाचिन्मृगयां चरंश्च शच्या सह मरुत्वानिव सीमन्तिन्या सह श्वशुरगृहे सुखमुवास । अत्रान्तरे सीमन्तिन्याश्चतुर्दशं वर्षं प्रावर्तत ।

---

## सीमन्तिन्या वैधव्यप्राप्तिः ॥

---

एवं सुखेन गच्छति काले कस्मिंश्चिद्दिवसे चन्द्राङ्गदः सवयोभिः सह यमुनां गत्वा लीलया परपारगमनाय तरीमारुरोह । तरी यावदपरपारसमीपं गच्छति तावत्सा दैववशादुद्भूतेन चक्रवातेन जले ममज्ज । एतद्दृष्ट्वा उभयतीरयोः स्थिता जनाः हा! हा! इति चक्रुशुः । मग्नानां मध्ये केचन भाग्यवशात् उन्मज्य तीरं प्राप्ताः ।

एतं वृत्तान्तं चित्रवर्मा श्रुत्वा पूर्वमेव ज्योतिर्विद्भ्यो ज्ञाततत्त्वोऽपि विषण्णोऽभूत् । सीमन्तिनी च मैत्रेयीवाक्ये आदारवत्यपि दुःखवार्ताश्रवणमात्रेण मूर्च्छिता भुवि पपात । तन्मातरः पौरजनाः पुरोहिता मन्त्रिणश्च शोकसंतप्ता विलेपुः । राजा नदीतीरमागत्य जले मग्नान् धीवरैर्विचाययामास । तदा

केषांचिद्देहाः केवलमलभ्यन्त। चन्द्राङ्गदस्य देहोऽपि नाप्राप्यत। अम्भसि मग्नस्य जामातुरौर्ध्वदेहिकं राजा विधिवत्कारयामास। सीमन्तिनी वैधव्यं प्राप्यापि मैत्रेय्या वचने विश्रम्भात् सोमवारव्रतं पूर्वतोऽपि विशेषविभवेन ऋत्विग्भिः कारयामास।

---

## निषध वृत्तान्तः॥

---

पुत्रस्य मरणं श्रुत्वा इन्द्रसेनः दुःखावेगात् भ्रान्तो बभूव। पुत्रशोकेन विक्लबं कर्तव्यमूढं वृद्धं राजानं पराभूय पूर्ववैरिणः पुष्करस्य पौत्रः पद्मबिन्दुः सभार्यं तं बन्धने स्थापयित्वा तद्राज्यमपजहार॥

---

## चन्द्राङ्गद वृत्तान्तः॥

---

जले मग्नं चन्द्राङ्गदं जलभ्रमिः पाताललोकस्य तीर्थावतारद्वारं यमुनाया अधस्तलमनयत्। नागलोकात्स्नानार्थमागताः पन्नगकन्यकाः मूर्च्छाक्रान्तं तं राजकुमारं दृष्ट्वा करुणया स्वलोकं नीत्वा सर्पराजस्य तक्षकस्य समीपमनयन्। तत्र देवेन्द्रभवनोपमे हर्म्ये नवरत्नकरम्बितैः जाम्बूनदमयैः स्तम्भै-

रलंकृते चन्द्रकान्तोपलमये मण्टपे अमरसदृशैर्नागैः अप्सरस्सदृशीभि र्नागकन्याभिश्च उपास्यमानं नागराजं ददर्श चित्राङ्गदः। तक्षकश्च तमानीतवतीः कन्या दृष्ट्वा "अयं कः? किमर्थमेनं भवत्योऽत्रानीतवत्यः?" इत्यपृच्छत्। "वयं स्नानार्थं यमुनां गताः। तत्रायं जले मग्नो मरणोन्मुखोऽस्माभिर्दृष्टः। तं वयं कृपयात्राऽऽनीतवत्यः। नातोऽधिकं जानीमः" इति ता अवदन् ॥

तच्छ्रुत्वा तक्षकस्तं राजकुमारं तस्य देशं कुलं नाम च पप्रच्छ। चन्द्राङ्गदः स्वस्य देशं कुलं नाम विवाहमारभ्य नौकाया यमुनायां मज्जनपर्यन्तमुक्त्वा "सर्वथा भवतैवाहं रक्षणीयः" इत्यवदत्। तक्षकश्चन्द्राङ्गदस्य वाक्यं श्रुत्वा "मा त्वं भैषीः, अत्रैव तिष्ठ। भूलोके का देवता युष्माभिराराध्यते? तत्कथय" इत्यपृच्छत्। "सत्स्वप्यनेकेषु देवेषु महादेव इति यः प्रसिद्धः तमेव उमापतिं महेश्वरं तत्रत्याः सर्वे वयमाराधयामः" इत्यब्रवीत्तक्षकं चन्द्राङ्गदः। चन्द्रशेखरस्य भक्ताग्रेसरतक्षकस्तच्छ्रुत्वा "राजकुमार! तव शिवभक्तिं दृष्ट्वा नितरामहं तुष्टः। मम वाक्यं शृणु! एतस्य लोकस्य वैभवं पश्यसि किम्? अत्रत्याः सर्वेऽपि शाखिनः कल्पवृक्षाः, सर्वा वाप्योऽमृतजलाः, अत्रत्यानां मरणभीतिः, जरा व्याधिराधिश्च न सन्ति। पश्येमाः कन्या अप्सरोभ्योऽप्यतिरूपवतीः, आसां मध्ये यां त्वमपेक्षसे तां परिणय। भूलोकं मनसापि मा स्मर" इत्यभाषीत्।

महाबुद्धिमान्राजपुत्रः तक्षकस्य वचनं श्रुत्वा अञ्जलिं बद्ध्वा "नागराज! अनुगृहीतोऽहम्। भवदुक्तम् सर्वमुपपन्नम्। तथाऽपि मम पितरौ वृद्धौ, भार्या युवतिर्नवोढा पतिव्रता च। तेषां परित्यागः पापकारणम्। अन्यश्च क्षत्रियकुले जातस्य मम प्रजापालनं धर्मः। अत्र स्थितस्य मम अधर्मप्राप्तिर्धर्म हानिश्च भवेताम्। तस्मान्मामनुजानातु भवान्" इति विज्ञापयामास।

तक्षकस्तस्य पापभीरुतां धर्मबुद्धिं च वीक्ष्य "श्वो गन्ताऽसि परश्वो गन्ताऽसि" इति कालं हापयन् त्रीन्संवत्सरान् महता सुखेन तं तत्र स्थापयामास। अथैकस्मिन्दिने भक्ष्यादि सहितेन मृष्टान्नेन तं भोजयित्वा वस्त्रालंकारादिभिरलंकृत्य स्वलोकगमनमन्वजानात्। गमनाय वायुवेगं चन्द्रपाण्डरं सर्वत्राव्याहतगतिं युद्धे जयप्रदम् एकं घोटकम्, अयुतं राक्षसवीरांश्च अदात्। तस्मै पारितोषिकतया दत्तानि रत्नानि सुवर्णं वस्त्राणि च वाहयितुं नागकुमारांश्च तेन सह प्रेषयामास। चन्द्राङ्गदस्तं प्रणम्य तं वाजिनमारुह्य तद्दत्तपरिवारेण सह प्रतस्थे। यमुनाप्रवाहमार्गेण गच्छन् सः आर्यावर्ते चित्रवर्मणो नगराभ्याशमगच्छत्॥

तस्य दिवसस्य सोमवासरत्वात् प्राप्तवैधव्यापि सीमन्तिनी व्रताचरणार्थं स्नातुं सखीभिस्सह यमुनायास्तीर्थमागच्छत्। स्नान्ती सा मध्येप्रवाहम् अश्वमारुह्य गच्छतः पुरुषस्य दर्शनमात्रेण विकृतचित्ता आसीत्। राजकुमारोऽपि आभरणहीनां

मङ्गलसूत्रादिसौमङ्गल्यचिह्नरहितां शोकेन कृशां सीमन्तिनीं दृष्ट्वा कृच्छ्रात् स्वभार्यामवगतवान्। "अहो! इयं तपस्विनी मम प्रत्यागमनाशया केवलं प्राणान्धारयति। इमां किंचित्सान्त्वयित्वा निषधान्गच्छामि" इति विचिन्त्य तस्याः सकाशमगच्छत्। "अये बाले! का त्वम्? कस्य पुत्री? कस्य भार्या?। त्वं दुःखनिमग्नेव भासि, किं तव शोककारणम्?" इत्यपृच्छत्। तद्वाक्यश्रवणमात्रेण सीमन्तिनी आशाया अत्युत्कटां कोटिमारूढा अश्रुपूर्णाक्षी लज्जया शिरोऽवनमय्य तूष्णीं तस्थौ। पूर्वाधिकविलक्षणदिव्यरूपं देवसदृशं चन्द्राङ्गदं वीक्ष्यापि तमजानन्त्यः सख्यस्तम् एवमकथयन्। "इयम् एतद्देशाधिपस्य चित्रवर्मणो महाराजस्य पुत्री, इन्द्रसेनस्य स्नुषा। चन्द्राङ्गदस्य भार्या। अस्या भर्ता अस्मिन्नेव तीर्थे उडुपेन यमुनां तरन् जले मग्नः। अस्याः श्वशुरौ वृद्धौ शत्रुभिर्हृतराज्यौ बंधने निक्षिप्तौ। बाल्य एव वैधव्यं प्राप्ता इयं वैराग्येन सर्वान्भोगान् परित्यज्य पत्युः प्रत्यागमनाशया प्राणान्केवलं धारयति। एतादृशं क्लेशं प्राप्तापीयम् अद्य उमामहेश्वरव्रतं निर्वर्तयितुं स्नानार्थमत्रागता। इयं तपस्विनी त्वां दृष्ट्वा भर्तारं दृष्ट्वेव विकृता। विरक्ताया अस्याः ईदृशभावोदये कारणं न जानीमः" इति ॥

सीमन्तिनी च तेन सह भाषणं विना स्थातुमशक्नुवती "सुभग! त्वं ममापि मनो हरसि। कस्त्वम्? देवो वा सिद्धो वा गन्धर्वो वा आहोस्वित् ममार्यपुत्र एववा? ब्रूहि त्वं तत्त्वम्।

अमानुषरीत्या अश्वमारुह्य जलोपरि गच्छतस्तव मन्नि कटमागत्य मां प्रीत्या द्रष्टुं प्रष्टुं च किं कारणम्? त्वत्तोऽपि महारूपवतो गन्धर्वादीन् दृष्टवत्या अपि मम मनः ईषदपि न चलितम्। तदिदानीं त्वद्दर्शनेन त्वयि बद्धरागं जातम्। तत्रापि कारणम् त्वयैव वाच्यम्"। इत्युक्त्वा अश्रुभिरात्मानं सिञ्चन्ती मुक्तकण्ठा उच्चै रुदत्येव गतसंज्ञा पपात। चन्द्राङ्गदोऽपि भार्याया भावगम्भीरं वाक्यं श्रुत्वा ततोऽपि द्विगुणं स्वस्य शोकं बहिर- प्रकाशयन् धैर्येण स्थगयित्वा तां हस्ताभ्या मुत्थाप्य कृशाङ्गि! वयं सिद्धाः। तव भर्ता जीवति। अहं तस्य प्रियसुहृत्। सः द्वित्रैर्दिवसैरत्रागत्य त्वां सुखयिष्यति" इत्युवाच। ततः सीमन्तिनी "अयं स्पर्शो ममार्यपुत्रस्यैव। नात्र संदेहः। किमपि शुभसूचकमेवास्ति। आत्मनोऽप्रकाशने तस्य किमपि कारणं भवेत्। द्वित्रान्दिवसान्प्रतीक्षे। उमामहेश्वरावेव शरणं गच्छामि" इति निश्चित्य स्वगृहं गत्वा पूजां निरवर्तयत्।

चन्द्राङ्गदः प्राणवल्लभायाः सखीमुखात् विदितमातापि तृबन्धनवृत्तान्तः स्वनगराभ्याशं गत्वा कस्मिंश्चिदुपवने स्थित्वा एकं राक्षसवीरं राज्यमपहृतवतः शत्रोः पद्मबिन्दोः सकाशं प्रेषयामास। स राक्षसः सभायामुपविष्टस्य पद्मबिन्दोरग्रे तस्थौ। तं दृष्ट्वा सभ्या मन्त्रिणः स च राजा सर्वे बिभ्युः। तदा स राक्षसः "अहं नागराजस्य तक्षकस्य सेवकः। राजपुत्रस्य चन्द्राङ्गदस्यः सैनिकः। पुराद्बहिरुद्याने स्थितेन तेनास्मि दूतः प्रेषितः। यूयं तस्योदन्तं यमुनायां मज्जनपर्यन्तमेव जानीथ।

तदुपरि श्रूयतां कथयामि। ततो राजकुमारो जलावर्तेन रसातलं नीतः। सः तत्र स्नातुमागताभिर्नागकन्याभिः नागराजस्य तक्षकस्य संनिधिं कृपयाऽनीयत। तक्षकस्तस्य विद्यां शिवभक्तिं पापभीरुतां धर्मबुद्धिं च निरीक्ष्य संतुष्टः त्रीन्वत्सरांस्तत्रैव स्थापयामास। ततस्तक्षको मामन्यांश्च कांश्चन राक्षसान् तस्य साहाय्यार्थं दत्वा आवश्यकेषु कार्येषु स्वयमेवागत्य कार्यं साधयिष्यामीति उक्त्वा चन्द्राङ्गदं प्रेषयामास। पथ्यं वचनं ब्रवीमि शृणु। यदि त्वं स्वयमेव तस्य राज्यं मुञ्चसि तर्हि तव भद्रं भवेत्। नोचेदहमेक एव तव विनाशायालम्। किं पुनः सर्वैरस्माभिः सहितश्चन्द्राङ्गदः" इत्यवदत्।

पद्मबिन्दुस्तद्वाक्यश्रवणमात्रेण भीत्वा कारागारं स्वयमेव गत्वा सभार्यायेन्द्रसेनाय नमस्कारं कृत्वा चन्द्राङ्गदो जीवतीति वृत्तान्तं कथयित्वा मङ्गलस्नानवस्त्रालङ्कारभोजनादिभिस्तावुपचार्य शिबिकामारोप्य अमात्यादिभिः परिवृतो बाह्योपवनमगमत्। प्राक्तना अमात्याः श्रेणयः सबलावृद्धाः पौराश्च तत्र समाययुः। चन्द्राङ्गदः पितरावागच्छन्तौ विज्ञाय तावभिमुखो गत्वाऽनमत्। तौ मृत्युमुखादागतं पुत्रं पर्यष्वजेताम्। चन्द्राङ्गदो नागलोकादानीतैः वस्त्राभरणादिभिः पितरौ पूजयित्वा "राज्यापहारिणम् एनं पद्मबिन्दुं किं कुर्याम्?" इति पितरमपृच्छत्। "नायं राज्यापहर्ता, किन्त्वस्मद्राज्यरक्षकः, तस्मान्मित्रकोटौ गणनीयः" इति इन्द्रसेनः पुत्रमुवाच। तच्छ्रुत्वा पद्मबिन्दुः चन्द्राङ्गदं तत्पितरौ च प्रणम्य क्षम्यतां

ममापराध इत्ययाचत । इन्द्रसेनः सपुत्रभार्यः स्वभवनं गत्वा आगतान्सर्वान्यथार्हं संभाव्य विसर्जयामास । पश्चाच्चिन्द्रवे तदीयं गृहक्षेत्रवित्तादिकं दत्वा तं सेनापतिं चकार चन्द्राङ्गदः । पूर्वमन्त्रिणः स्वस्वाधिकारे नियुज्य नवीनेभ्योऽपि कृपयाधिकारमदात् । चन्द्राङ्गदः स्वस्य यमुनायां मज्जनवृत्तान्तं, नागलोकगमनं, तत्र नागराजकृतमादरातिशयं च पित्रोरकथयत्। इन्द्रसेन एतत्सर्वं स्नुषायाः सोमवारव्रतानुष्ठानस्य फलममन्यत । अन्येद्युरिन्द्रसेनश्चित्रवर्मणे चन्द्राङ्गदो जीवतीति वृत्तान्तं दूतमुखेन निवेदयामास । चित्रवर्मा च जामातुः क्षेमोदन्तं श्रुत्वा हृष्टः सीमन्तिनीं हरिद्राकुंकुममङ्गलसूत्रादिभिः सौमङ्गल्यचिह्नैरलंकृत्य देवतायतनेषु महोत्सवमकारयत् । तत्पत्तनस्थाः सर्वे जनाः सीमन्तिन्याः देवताभक्तिं प्रशशंसुः ॥

चित्रवर्मा इन्द्रसेनं सबन्धुपरिवारं स्वनगरमानेतुं पूर्वप्रेषितं पुरोहितमेव प्रेषयामास। इन्द्रसेनः सान्तःपुरः सहामात्यः चन्द्राङ्गदेन सह चित्रवर्मपुरमाव्रजत्। तत्र चित्रवर्मा आगतान् संबन्धिनः सत्कृत्य पुरोहिताज्ञया कस्मिंश्चिच्छुभे दिने स्वपुत्रीं सीमन्तिनीं पुनश्चन्द्राङ्गदाय प्रददौ । सा च चन्द्राङ्गदस्य दर्शनादिनादारभ्यैव पीतरसायनेव पुष्टियुक्ता बभूव । सा भर्तुः संनिधौ रतिरिव बभौ ॥

इन्द्रसेनः पुत्रेण स्नुषया च सह स्वनगरमागत्य पुत्रं चन्द्राङ्गदं राज्येऽभिषिच्य सभार्यस्तपोवनं गत्वा शिवमाराध्य तच्चरणमूलं भेजे ॥

एवं सीमन्तिनी नष्टं पतिं उमामहेश्वरयोराराधनेन पुनः प्राप्य राज्ञी भूत्वा यावज्जीवं अविधवैवासीत्। तस्या अष्टौ पुत्राः। एका कन्या च बभूव ॥

सीमन्तिनीचरित्रम् संपूर्णम् ॥

---

## ॥ अंशुमती विवाहः ॥

### ( प्रदोषव्रतमहिमा )

---

आसीद्विदर्भेषु सत्यरथो नाम राजा। तस्य राज्यमपहर्तुकामो दुर्धर्षनामा साल्वराजो विदर्भाणां राजधानीं कुण्डिननगरीं स्वसैन्येन रुरोध। तदा सत्यरथः शत्रुणा सह सप्ताष्टानि दिनानि सुदारुणं युद्धं कुर्वन् अन्ते तेन निहतः। ततः साल्वस्य सैनिकाः नगर्यां राजभवनं प्राविशन्। तत्र स्थितानि रत्नानि आभरणानि वासांसि गाश्चापाहरन्। राजमहिषी कुत्रकुत्रेति तां विचिक्युः। शीलवती नाम सा राज्ञी क्वचिन्निलीना सती निशीथे गाढे तमसि अन्यालक्षितं गृहाद्बहि-

निर्गत्य वनं प्रविवेश। अन्तर्वत्नी सा शीलवती यावत्सूर्योदयं अरण्ये चचार। उदिते भानौ तृषापरीता सा तत्र किंचन निर्मलं सरोऽपश्यत्। तज्जलं पीत्वा यावत्तटे उपविशति तदा सा तनयं प्रासूत। शिशुं तत्रत्ये कुट्टिमे शाययित्वा वस्त्रक्षालनाय यदा तटाकमवततार। तदा कश्चन ग्राहस्तां पादयोर्जग्राह। अन्तर्जले सुदूरं तेनाकृष्टा पञ्चत्वमगमत्। तदा मात्रा विसृष्टः शिशुः उच्चैः रुरोद। तत्र संनिहितात् ऋष्याश्रमात् उमा नाम काचन विधवा ब्राह्मणी एकहायनं बालमुदुह्य स्नातुं तदेव तीर्थमाययौ। सा तस्यार्भकस्य रुदितं श्रुत्वा कस्यायं ध्वनिः? इति सर्वतो दृष्टिं सञ्चारयामास। तदा सरसस्तीरे वृक्षस्याधः कुट्टिमे रुदन्तं राजलक्षणैर्लक्षितं काञ्चनप्रभं कंचन शिशुमद्राक्षीत्। अहो! किमाश्चर्यमेतत्? कथमच्छिन्ननाभिनालः शिशुरयं निर्जने स्थले त्यक्तः?। इदानीमेव जातं शिशुमुत्सृज्य क्व गताऽस्य सवित्री? अविज्ञातकुलं शिशुं कथं स्पृशेयम्? रोरूयमाणमेनं कथं वा उपेक्षेय?। इति चिन्तयन्त्यां तस्यां अशरीरा वाग्गगनादुच्चचार। "ब्राह्मणि! रक्षैनं बालकम्। क्षत्रियकुमारोयं। मा संशयिष्ठाः। इदानीमेवेमं प्रसूयास्य जननी जलेऽवतीर्णा ग्राहगृहीता पञ्चत्वमगमत्"। तच्छ्रुत्वा सा स्त्री तं शिशुं तटाके क्षालयित्वा स्वयं च स्नात्वा स्वबालं तं शिशुं च गृहीत्वा पर्णशालामगच्छत्। ततः सा ब्राह्मणी त क्षत्रियशिशुमपि औरसमिव स्वस्तन्यदानादिना पुपोष। सा

स्वतनयस्य शुचिव्रत इति, राजकुमारस्य धर्मगुप्त इति च नामनी चकार। सा द्वित्रान् हायनान् तत्रैव स्थित्वा बालाभ्यां सह एकचक्रनगरमगच्छत्। तत्र भैक्षं चरित्वा तावपोषयत्। बहुतिथे गते काले उभावपि कुमारौ उपनिन्याते।

कदाचित्ताभ्यां बालाभ्यां सह शिवालयं गतां तां दृष्ट्वा तत्रागतः शाण्डिल्यो नाम मुनिः व्यहसत्। सा तन्निकटं गत्वा "स्वामिन्! अनाथां मां दृष्ट्वा किमर्थं हससि?" इत्यपृच्छत्। "अस्य कुमारस्य प्राग्भवीयं कर्मविपाकं स्मृत्वा हसामि; नान्यदस्ति किंचित्", इति स तां प्रत्यब्रवीत्। "अयं पूर्वजन्मनि कः? कीदृशोऽस्य कर्मविपाकः? यद्यत्र गोप्यं, तत्कथयतु भगवान्" इत्यन्वयुङ्क्त। "अयं राजकुमारः अतीतजन्मनि पाण्ड्यदेशाधिपतिः शिवभक्तो राजा। स कदाचित्प्रदोषसमये महादेवं पूजयन् देवगृहे आस्त। तदा वीथ्यां कंचित्कोलाहलं श्रुत्वा पूजां हित्वा बहिर्ययौ। तेन दोषेण अस्मिञ्जन्मनि राजपुत्रत्वेन जनित्वाऽपि बाल्य ईदृशीमवस्थां प्राप्तः पाण्ड्यः। अनेन बालेन यथाविधि प्रदोषव्रतं कारयसि चेत् अयं पितृ राज्यं प्राप्नुयात्। तथैव त्वं तव पुत्रश्च कुरुतम्। युवामपि व्रतप्रभावेन महाक्षेमं प्राप्नुयातम्" इत्यवादीच्छाण्डिल्यः। तच्छ्रुत्वा गृहं गता ब्राह्मणी, शुचिव्रत, धर्मगुप्तश्चेत्त्रयोऽपि प्रदोषव्रतं आरभ्य एकं संवत्सरमाचरन्। ततः कस्मिंश्चिद्दिने शुचिव्रतः प्रातरुत्थाय एकल एव स्नातुं नद्यां

ययौ । तत्र नद्यास्तीरे कस्यचिद्रुमस्याधस्तात् सुवर्णनिष्कपूर्णम् स्थूलं कांस्यपात्रमेकं भूमौ अर्धापिहितम् अपश्यत् । स तं निधानकलशम् अन्याविदितम् उद्धृत्य गृहमानीय "मातर्मातः! पश्येदम्" इति कांस्यपात्रमदर्शयत् । अथ सा विस्मिता साध्वी समाहूय नृपात्मजम् "युवामुभावपि इदं द्रव्यं समं विभज्य गृह्णीतम्" इत्यवदत् । तच्छ्रुत्वा धर्मगुप्त आह "अम्ब! ज्येष्ठस्य भ्रातुर्व्रताचरणेन तुष्टः साम्बमूर्तिस्तस्मै एतत् निधानमदात्, तत्तस्यैवास्तु । यदि स देवो मत्पूजयाऽपि तुष्टः तर्हि मय्यपि पृथगेव कृपां कुर्यात्" इति । ततः संवत्सरेऽतीते उभावपि द्विजनृपात्मजौ नदीतीरे कस्मिंश्चित्कानने अक्रीडताम् । तत्र तौ पुष्पापचयं कुर्वतीः नृत्यन्तीर्गायन्तीश्च शतशो गन्धर्वकन्या अपश्यताम् । तास्वेका अंशुमतीनाम बहुशोभमाना गन्धर्वराजदुहिता द्वितीयं कन्दर्पमिव स्थितं धर्मगुप्तं दृष्ट्वा "राजकुमार! अहं द्रविणकस्य गन्धर्वराजस्य दुहिता; त्वद्दर्शनमात्रेण त्वां परिणेतृकामा संवृत्ता" इत्यब्रवीत् । "भद्रे! अहं विदर्भराजसुत इत्येतत्सत्यमेव । मम राज्यं नास्ति, नास्ति पिता, नास्ति माता; ब्राह्मण्या भिक्षान्नेनैव पोषितोऽस्मि । तत्कथम् एतादृशं दरिद्रं मां परिणेष्यसि?" इति सोऽवदत् । कमलपत्राक्ष राजपुत्र! अहं सर्वकलाभिज्ञा त्रिकालज्ञा च । त्वामहं निःस्वं जाने, तथाऽपि त्वयि मम मनो लग्नम्, इतःपरम् नान्यं पतिं वृणे । अपि च, तव परमेश्वरप्रसादेन महाभाग्यमुपस्थितम् । मम पितैवात्रागत्य तुभ्यं मां प्रदास्यति । तस्य

साहाय्येन त्वं पैतृकं राज्यमचिरादवाप्स्यसि। तस्मात्त्वयाऽपि पुनः परश्वोऽत्रागन्तव्यम्" इत्युक्त्वा स्वकण्ठ धृतमनर्घम् मुक्ताहारमुन्मुच्य तत्कण्ठे संयोज्य सखीभिः सह अंशुमती दिवमगात्। ततो धर्मगुप्तः शुचिव्रतेन सह गृहमगमत्। इमं वृत्तान्तमुमायै कथयित्वा अंशुमत्या निर्दिष्टे दिवसे शुचिव्रतेन सह धर्मगुप्तस्तमेव प्रदेशमगच्छत्। तत्र गन्धर्वराजो द्रविणकः सभार्यो दुहित्रा सह पूर्वमेवागत्य धर्मगुप्तं प्रतीक्षमाण आस। गन्धर्वो राजपुत्रं दृष्ट्वा 'अपि कुशलं ते? पूर्वेद्युरहमीश्वरं सेवितुं कैलासमगच्छम। तत्र कथाप्रसंगे नीलकण्ठो मामुवाच 'भुवि धर्मगुप्तो नाम मातापितृविहीनो राजकुमारो वर्तते। सः प्रदोषव्रताचरणेन मामाराधितवान्। तस्यानुग्रहो मया कर्तव्यः। तस्मात्त्वमेव तत्र गत्वा तव पुत्रीमंशुमतीं तस्मै प्रतिपादय। शत्रुभिरपहृतं परंपराप्राप्तं तद्राज्यं च तस्य वशे कुरु' इति। तस्मान्मम पुत्रीं तुभ्यं प्रयच्छामि प्रतिगृहाण" इत्यब्रवीत्। तथाचेदनुगृहीतोऽहम् इत्यवदद्धर्मगुप्तः। ततो द्रविणको धर्मे दुहितरं प्रदाय उज्ज्वलान् रत्नभारान्, मुक्ताहारान्, वस्त्राणि, दिव्यान्यनेकानि वस्तूनि, गजानामयुतं, वाजिनां नियुतं, रथानां सहस्रं अनेकानत्युदारान्गन्धर्ववीरांश्च ददौ। पुनरसाधारणं जयप्रदमेकं रथम, मशरं शरासनम्, रिपुमार्दिनीं शक्तिश्चादात्। गन्धर्वराजो दुहितुरेवं विवाहं विधाय पुत्रीं जामातरं चापृच्छ्य विमानमारुह्य भार्यया सह दिवमगात्। धर्मगुप्तो गन्धर्वनन्दिनीं गृहं नीत्वा मातृसमीपे स्थापयित्वा

रथमारुह्य सेनया सह विदर्भानभिययौ । तत्र कुण्डिनं गन्धर्व सेनया पर्यवेष्टयत् । तद्दृष्ट्वा दुर्धर्षो योद्धुं प्रावर्तत । धर्मगुप्तस्तेन सह युद्ध्वा अंशुदत्तया जयप्रदया शक्त्या तं हत्वा नगरं प्राविशत् । तत्र पौराः श्रेणयोऽमात्याश्च तं स्वराजकुमारं ज्ञात्वा मुदा राज्येऽभ्यषिञ्चन् ततो महाराजो दूतान् एकचक्र नगरं प्रेषयित्वा जायामंशुमतीं स्वपोषिकां द्विजवनितामुमां तत्पुत्रं शुचिव्रतं चानयामास । प्रदोषव्रतमहिम्ना प्राप्तमहैश्वर्यो रत्नसिंहासनाधिरूढो धर्मगुप्तः ब्राह्मणीं मातृवत् तत्पुत्रं भ्रातृवच्च भावयंस्तस्य विवाहं कारयामास । एवमेव ये प्रदोषव्रतेन विधिवच्छिवं पूजयन्ति ते सर्वे आशुतोषस्य महेश्वरस्य प्रसादेन महदैश्वर्यम् प्राप्नुयुः ॥

---

## ॥ श्रीरुक्मिणीकल्याणम् ॥

---

अस्ति विदर्भेषु कुण्डिनं नाम सर्वसमृद्धिमत् पुरम् । तस्य देशस्य भीष्मको नाम विष्णुभक्तो राजाऽऽसीत् । तस्य पञ्च पुत्रा आसन । तेषामग्रजो रुक्मी । ततो रुक्मरथः, रुक्मबाहुः, रुक्मकेशः रुक्ममाली इति चत्वारः । तेषां यवीयसी स्वसा रुक्मिणी । सा महारूपवती सर्वेषां गुणानां मातृगृहं च; किं बहुना वर्णनेन । तस्या उपमानं मंगलदेवता रमा, हैमवती मङ्गलाम्बिका द्वे एव । सा यदा यौवनं प्राप्नोत्

तदा तां भीष्मकः श्रीकृष्णाय प्रदातुमियेष । स्वसुर्विरुद्धगुणवान् विष्णुद्वेषी रुक्मी वृद्धं पितरमनादृत्य स्वसारं कृष्णादन्यस्मै दातुं प्रायतत । तदा चेदिषु वसुदेवभगिन्याः श्रुतश्रवसो भर्ता दमघोषो नाम नृपतिरासीत् । तस्य पुत्रः शिशुपालो नाम श्रीकृष्णाद्विट् । रुक्मिणीं तस्मै दातुं रुक्मी निरचिनोत् ॥

तत्र तत्र धनिकेभ्यः धनं प्राप्तुमटमानाः ब्राह्मणाः कुण्डिनमागताः राज्ञो राजपुत्रेभ्यश्च धनं लब्ध्वा रुक्मिण्याः सकाशमप्यगच्छन् । तस्याः सर्वातिशायि सौन्दर्यम् दृष्ट्वा "शोभनाङ्गि! त्वं श्रीकृष्णस्यैव भार्या भवितुमर्हसि । स एव तवानुरूपः पतिः । यदि त्वामन्यः परिणेष्यति तर्हि तव जन्म व्यर्थमेव । पर्यालोचनायां स देवकीपुत्रः त्वत्तोऽपि किंचित् गुणाधिक एव भवेत् । न तु ईषदपि न्यूनः । तादृशयोरेव दाम्पत्यं श्लाघ्यम् ।" इत्यब्रुवन् । ते ब्राह्मणाः तथैव श्रीकृष्ण सकाशं च प्राप्ताः "त्रिलोकसुन्दर श्रीकृष्ण! कुण्डिने रुक्मिणी नाम भीष्मकसुता अस्ति, सा जङ्गमा सुवर्णलतैव । किं बहुना तस्या गुणवर्णनेन । सा रतीदेव्याः श्वश्रूरेव भवेत् । सैव तव भार्याभवितुमर्हति । तस्याः समा त्रिषु लोकेष्वपि नास्ति" । इत्यवदन् । श्रीकृष्णो रुक्मिणी च परस्परेण अदृष्टावपि मध्यस्थानां वचनेनैव अन्योन्यं परिणेतुकामावभूताम् ॥

स्वस्याः शिशुपालाय प्रदाने भ्रातुरभिनिवेशं, तेन परश्वो निश्चितं उद्वाहं च रुक्मिणी विजज्ञौ । तेन व्याकुलापि

रुक्मिणी धैर्येण पत्रिकां विलिख्य आप्तं कंचन द्विजमाहूय तद्धस्तेन भगवते तां प्रेषयामास । ब्राह्मणः त्वरितं द्वारकां गत्वा भैष्म्या लिखितां पत्रिकां श्रीकृष्णायादात् । गोविन्दोऽपि सादरं तां पपाठ ॥

---

## रुक्मिणी पत्रिका ॥

---

रुक्मिण्युवाच—

(१) भुवनसुन्दर श्रीकृष्ण! गाम्भीर्य-सौन्दर्य-शौर्य औदार्य-सौभाग्य-वात्सल्य प्रभृतीन् अनेकान् तव गुणान् बहुभ्योऽहमश्रृणवम् । तस्मान्मम मनः त्वय्येव त्रपां हित्वा विशति ।

(२) स्वयं धार्ष्ट्येन पत्रं लिखितवतीं मां माऽन्यथा कल्पय । विद्यायां वयसि ऐश्वर्ये रूपे च स्वस्याः तुल्यं त्वां सत्कुलोत्पन्ना बुद्धिमती का वा कन्या न वृणीत? ।

(३) इन्दिरायाः पतिं भक्तप्रियं त्वां अहमपि वृणे । हे प्रियतम! त्वां प्रणमामि । दास्या मम अभीष्टं कुरु ।

(४) ब्रह्मणाऽहं तवैव भार्या सृष्टा । तादृशीं मामन्यः स्पृशेद्यदि तत्तवैव अपमानो भवेत् । तस्मान्मां भार्याम् विधेहि ।

(५) अहं व्रतैः दानैः देवब्राह्मणपूजया च श्रीमन्तं नारायणं आराधितवती। तैः रमापतिस्तुष्टो यदि भवानेव मम पाणिं गृह्णातु। अन्ये शिशुपालादयो मां मा स्पृशन्तु।

(६) परश्वो विवाहो निश्चितः। अतोऽत्र कालविलम्बो न कर्तव्यः। तस्मात्त्वं श्व एव कुण्डिनमागत्य शिशुपालजरासन्धादीन्विजित्य मामपहर।

(७) बन्धून् अहत्वा अन्तःपुरस्थितां त्वां कथं हरेयम् इति पृच्छति चेत् उपायं कथयामि। श्वः प्रातरहं ग्रामाद्बहिः स्थितं पार्वत्या आलयं देवीं पूजयितुं गमिष्यामि। तत्रागत्य माम् अपहर। द्वारकां नीत्वा शुभे दिने मां परिणेष्यसि।

(८) हे अम्बुजाक्ष! न केवलमहं तव रूपं गुणांश्च श्रुत्वा त्वां वृणे। किंतु "त्वं नारायणः तव पादप्रक्षालनोदकं शिरसि धृत्वा उमापतिप्रभृतयः स्वाज्ञानं परिहृतवन्तः" इति जाने। अत एव इतरान्प्रत्याख्याय त्वां प्राप्तुं मम निर्बन्धः। यदि मां त्वमस्मिन् जन्मनि न परिणेष्यसि तर्हि अहं प्राणानेवोत्स्रक्ष्यामि। ततश्च शतजन्मभिर्वा तपस्तप्त्वा त्वामेव पतिं प्राप्नुयाम्। शिशुपालादीन् अपशदान् वामपादांगुष्ठेनापि न स्पृशेयम्"।

इति पत्रार्थम् श्रीकृष्णो ज्ञात्वा ब्राह्मणेन सह रात्रावेव रथमारुह्य सूर्योदयात्प्राक् कुण्डिनं प्राप। बलभद्रः स्वजनापृच्छ्य गतं भ्रातरं विज्ञाय तस्य साहाय्यार्थम् सेनया सह तमनुससार।

भीष्मकः स्वपुरं चित्रैर्ध्वजैः पताकाभिः तोरणैश्च अलंकृतं सुमृष्टं जलसिक्तम् अगरुधूपेन सुवासितं च चकार । श्वः करिष्यमाणस्य कन्या विवाहस्य अङ्गभूतं पुण्याहवाचनं नान्दी-श्राद्धं च चकार । ब्राह्मणेभ्यः हिरण्यं रजतं वासांसि धनूश्च ददौ । सर्वेषु देवायतनेषु पूजां अधिकं कारयामास । ब्राह्मणान् स्वाद्वन्नैर्भोजयामास । चेदिराजो दमघोषः पुत्रस्य विवाहाय बन्धुभिः परिवारेण च सहितः कुण्डिनमाययौ । भीष्मकः आगतं संबन्धिनम् अभिगम्य संपूज्य तदर्थम् क्लृप्ते प्रासादे स्थापयामास । तथैव विवाहप्रेक्षणाय आहूतानां साल्वजरा-सन्धप्रभृतीनां च निवासं कारयामास । निश्चितपुत्रविवाहो दमघोषश्च पुत्रस्य समावर्तनादीनि कर्माणि निरवर्तयत् ।

भ्रातरौ रामकृष्णौ अनाहूतावपि विवाहदर्शनायागतौ ज्ञात्वा भीष्मकः 'श्रीकृष्णः पुरे स्थापितश्चेत् कलहो भवेत्' इति भिया पुराद्बहिः उद्याने तयोः स्थलमकल्पयत्, कृष्णोऽपि 'इदमेव स्थलं रुक्मिणीमपहर्तुम् साधीयः' इति मत्वा तत्रैव तस्थौ । रुक्मिणी श्रीकृष्णस्यागमनं, तं प्रति प्रेषितस्य द्विजस्य प्रत्यागमनं वा अपश्यन्ती सती चिन्तयामास । "अहो विवाहस्य स्वल्पावशेषः कालः । अरविन्दाक्षः श्रीकृष्णः कुतो वा नागतः ? । सर्वज्ञो भगवान् मयि कमपि दोषं ज्ञातवान् वा ? अतोऽसौ नागतो नूनम् । भवतु मत्संदेशहरो ब्राह्मणो वा कुतो नागतः ? तत्र दुर्भगाया मम दुष्कृतमेव कारणम् । अत एव विधाता, महेश्वरः, अम्बिका वा दयां न करोति"

इति। एवं गोविन्दागमनं प्रतीक्षमाणाया वैदर्भ्या वाम ऊरुः भुजः नेत्रं च अस्फुरन्। एतानि शुभशंसीनि शकुनानि दृष्ट्वा किंचिद्धर्षेण यदा सा पुरतः पश्यति तदा तं ब्राह्मणं ददर्श। प्रहृष्टं तस्य वदनं दृष्ट्वा सुदती तं पर्यपृच्छत्। स च 'आगतः श्रीकृष्णः' इति प्रत्यब्रवीत्। परतस्तस्य महैश्वर्यम् दास्यन्ती वैदर्भी तदानीं निष्कमालां स्वकण्ठादुन्मुच्य तस्मै दत्वा नमस्कारमकरोत्।

नगरवासिनः सर्वे पुरुषाः सर्वाः स्त्रियश्च भ्रात्रा सह आगतं श्रीकृष्णं विज्ञाय बाह्योपवनं गत्वा तं ददृशुः। तस्य सर्वातिशायिनो गुणान्दृष्ट्वा "अयमेव अस्मद्राजपुत्र्या भर्ता भवितुमर्हति। नेतरे शिशुपालादयः। अस्मद्रुक्मिण्येव अस्य भार्या भवितुमर्हा नेतराः। वयं वदामो भीष्मकं गत्वा 'कन्या रामानुजायैव दातव्या' इति। क्रुद्धो राजा राजपुत्रो वा किं करिष्यत्यस्मान्?। यदि त्रिलोककृत् ब्रह्मा अस्मत्कृतानां सत्कर्मणां फलं ददाति तर्हि इममस्मन्मनोरथं पूरयतु" इत्यवदन्। तच्छ्रुतवन्तः चैद्यपक्षीयाः रुक्मिपक्षीयाश्च 'जनप्रवादं प्रतिषेद्धुं जनार्दनोऽपि नालम्' इत्युक्त्वा तूष्णीं स्थिताः।

द्वितीये प्रहरे वैदर्भी कतिपयसखीभिः सहिता सायुधैः जरासन्धादिभी रक्षकैर्गुप्ता ग्रामाद्बहिः स्थितं विदर्भकुल देवतायाः अम्बिकाया आलयं प्रति प्रतस्थे। वृद्धाः सुमङ्गलाः द्विजपत्न्यः देव्याः पूजार्थम् अक्षतान् लाजान् आभरणानि

वस्त्राणि माल्याणि अपूपान् फलानि एवमादीनि पूजोपकरणानि आदाय तामनुययुः । स्वलंकृता वारयोषितः नीराजनानि गृहीत्वा पुरतो ययुः । तदा मृदङ्गान् शङ्खान् वादित्राणि च अवादयन् । रुक्मिणी, देव्या आलयं प्राप्य पादौ प्रक्षाल्य आचम्य विप्रयोषिद्भिः उपदिष्टेन प्रकारेण षोडशभिरुपचारै-रुमाम् अपूजयत । फलादीनि निवेद्य आरात्रिकमकरोत् । 'चैद्यो मम भवेद्भर्ता' इति प्रार्थयेति पुरोहितपत्नीभिरुक्ता सा बाला 'कृष्णो मम भवेद्भर्ता' इति प्रार्थयामास । तदनन्तरं समीपे स्थितं इन्द्राण्या आलयं गत्वा तामपि विधिना अपूजयत ।

ततः सख्याः पाणिं स्वपाणिना गृहीत्वा कलहंसगामिनी शिञ्जाननूपुरा कुण्डलमण्डितानना नितम्बार्पितरत्नमेखला भैष्मी गमनच्छलेन स्वशोभां श्रीकृष्णाय दर्शयितुं पद्भ्यामेव किंचिद्दूरं चचाल । तां शत्रुभ्यस्त्रातुमागताः जरासन्धप्रभृतयो महाधीराः शूराः तस्या रूपं दृष्ट्वा विमुह्य वाहनेभ्यो भूमौ पेतुः । केषांचिद्धस्तेभ्यो धनूंषि गलितानि । रथमारोढुं वृद्धाभिः त्वर्यमाणा सा बाला रथस्य प्रथमे सोपाने पादं निधाय मुखे पतितान् अलकान् वामकरजैरपसार्य यदा परितः पश्यति तदा गरुडध्वजे रथे स्थितं श्रीकृष्णं पुरतो ददर्श । श्रीकृष्णो रथादवतीर्य रक्षकानविगणय्य राजन्यान्परिभूय तां रथ-मारोपयामास ।

स्वैः रक्षितां भैष्मीं निर्भयमपहृत्य गच्छन्तं गोपालं दृष्ट्वा जरासन्धप्रभृतयो राजानः असहमानाः श्रीकृष्णसेनां शरवर्षैरवा

किरन्। सा बाला शात्रवैः पराभूयमानां यादवसेनां दृष्ट्वा "एते कृष्णं जित्वा आत्मानम् अपहरेयुश्चेत् किं कुर्याम" इति अबिभेत्। श्रीकृष्णः तस्या मुखं दृष्ट्वा तदभिप्रायं ज्ञात्वा भीरु भैमि! मा भैषीः। गदसङ्कर्षणादयः शाल्वं बलं क्षणेन द्रावयिष्यन्ति पश्य" इत्यसान्त्वयत्। ततोऽमृष्यमाणैः रौहिणेयप्रभृतिभिः हन्यमाना जरासन्धादयो राजानः आयोधनात् विमुखा बभूवुः।

जरासन्धः शाल्वः दन्तवक्त्रः विदूरथः पौण्ड्रकश्च पुरं प्रविश्य हृतदारमिव विषीदन्तं शिशुपालं "सर्वम् ईश्वराधीनम्; न किमपि मनुष्याधीनम्। तत्र किमस्माभिः करणीयम्? गोपालबालेन इदानीं पराजिता अपि वयं पुरतः अस्माकम् अनुकूले काले आगते तं विजेष्यामहे। शीघ्रमेव तवान्यां कन्यां विवाहयामः। मा भैषीः; मा विषीद" इति सान्त्वयित्वा भीष्मकमनापृच्छय स्वस्वदेशान् प्रययुः। शिशुपालोऽपि पित्रा सह अन्याऽविदितं रात्रौ चोरवत् पलायत।

रुक्मी एतं वृत्तान्तं ज्ञात्वा सर्वेषु राजसु शृण्वत्सु "अहं गोपालापशदं कृष्णं हत्वा स्वसारम् आनेष्यामि। यद्यहम् इत्थं न कुर्याम् तदा कुण्डिनं न प्रवेक्ष्यामि" इति प्रतिजज्ञे। ततः सः रथमारुह्य सेनया सह श्रीकृष्णमन्वधावत्। नर्मदां तरन्तं तमासाद्य "तिष्ठ तिष्ठ रे जाल्म! ध्वाङ्क्षः पुरोडाशमिव मम स्वसारं मुषित्वा कुत्र यासि? तां वा मुञ्च; समरे प्राणान्वा

मुञ्च"। इति वदन्नेव अच्युतं शरैरवाकिरत् । स्मयमानो दाशार्हः तस्य धनुः चिच्छेद । पुनःपुनः रुक्मिणा गृहीतानि बहूनि शरासनानि च्छित्वा सूतं वाहान् ध्वजं च अच्छिनत् । ततो विधनुः निरायुधो रुक्मी पाणौ खड्गं चर्म च गृहीत्वा आवुत्तं हन्तुं प्राद्रवत् भगवानपि लीलया तस्य असिं चर्म च एकेनैव शरेण छित्वा तं हन्तुं असिम् आददे । भैष्मी भर्तारं स्वभ्रातृ वधोद्युक्तं विज्ञाय तस्य पादयोः पतित्वा आर्यपुत्र! अस्मिन् कल्याणसमये स्यालस्य वधोऽनुचितः । इति प्रार्थयामास । ततो वासुदेवः तदीयेनैव उष्णीषचंलेन तं बद्ध्वा तेनैव असिना तस्य श्मश्रून् केशांश्च क्वचित्क्वचिन्मुक्त्वा वपनं कृत्वा व्यरूपयत् ।

अत्रान्तरे रुक्मिणः सेनया सह युद्ध्यमानो बलरामः तां जित्वा भ्रातुरन्तिकमागत्य विरूपितं रुक्मिणं ददर्श । "कृष्ण! नाद्यापि तव बालभावो गतः । जुगुप्सितं कर्म त्वया कृतम । श्मश्रुकेशानां वपनं क्षत्रियाणां न युक्तम् । दिवाकीर्तीनां खलु तद्विहितम्?" इत्युवाच । ततो रुक्मिणीं दृष्ट्वा हे साध्वि वैदर्भि! एष क्षत्रियाणां घोरतरो धर्मः । राज्यस्य भूमेः वित्तस्य स्त्रिया वा हेतोः क्षत्रियाः बन्धूनपि घ्नन्ति । तस्मान्मा विषीद" इत्यसान्त्वयत् । रुक्मिणं च बन्धनादुन्मुच्य प्राणावशेषमुत्ससर्जयामास रौहिणेयः । रुक्मी च स्वप्रतिज्ञानुसारेण कुण्डिनमप्रविश्य पुराद्बहिः भोजकटं नाम नूतनं नगरं निर्माय तत्र न्यवसत् ।

श्रीकृष्णश्च सर्वान्भूपानेवं विजित्य रुक्मिणीं पुरमानीतवान् । देवकी वसुदेवश्च तां स्नुषां दृष्ट्वा तुतुषतुः । वसुदेवः बान्धवेभ्यः दूतैर्विवाहपत्रिकां प्रेषयामास । भीष्मः धृतराष्ट्रः पाण्डवाः द्रुपदः कैकयाः एवमाद्याः अनेके राजानः सपरिवारा आगताः । भीष्मकश्च रुक्मिणमेकं वर्जयित्वा अन्यपरिवारेण सहागतः । श्रीकृष्णः शुभे सुमुहूर्ते वैदर्भीं पर्यणयत् । सर्वे-बान्धवाः वधूवरयोः परिबर्हम् ददुः । तस्मिन्महोत्सवे द्वारकायां सर्वा अपि रथ्याः विपणयः चत्वराणि च सुमृष्टानि सुसिक्तानि चासन् । पुरि सर्वत्र तोरणानि वितानानि च आबद्धानि । वसुदेवः पुत्रस्य विवाहकाले ब्राह्मणेभ्यो दक्षिणां ददौ । अष्टौ दिनानि सर्वेभ्यो वर्णेभ्योऽन्नं ददौ । एवं महता विभवेन श्रीकृष्णरुक्मिण्योर्विवाहमहोत्सवो द्वारकायामभूत् ॥

इति श्रीरुक्मिणी कल्याणम् ॥

---

## प्रद्युम्न चरित्रम् ।

---

श्रीकृष्णः रुक्मिण्या विवाहानन्तरं बहुकालपर्यन्तं तस्यां तनयं न लेभे । ततः पुत्राभावात् दूयमानमानसो वासुदेवः रुक्मिण्या सह कैलासं गत्वा महादेवोद्देशेन द्वादश वत्सरां-स्तपश्चचार । तपसा तुष्टस्त्र्यम्बकस्ताभ्यां पुत्रवरमदात् । तौ दम्पती प्राप्तमनोरथौ द्वारकामगच्छताम् ।

पूर्वम् महादेवस्य तपोविघातार्थम् प्रवृत्तो मन्मथस्तस्य तृतीयलोचनाग्निना भस्मीभूतः। ततस्तद्भार्या रतिः स्वभर्तुरुज्जीवनाय महेश्वरं प्रार्थयामास। प्रसन्नो हरः "प्रतीक्षस्व कंचित्कालं भद्रे! तव पतिः श्रीकृष्णात् रुक्मिणीदेव्याम् उद्भविष्यति। तदा तं पतित्वेन प्राप्स्यसि" इत्यवदत्। सा देवी श्रीकृष्णस्य अवतारं प्रतीक्षमाणा सत्यलोकेऽवसत्।

भूमाववतरिष्यतः शार्ङ्गपाणेः साहाय्यार्थम् देवानां अवतरणकथायां ब्रह्मसदसि प्रवृत्तायां 'द्रौपदी पञ्च पतीन् परिणेष्यति' इति वृत्तान्तं रतिः श्रुत्वा, पितामहे शृण्वति उच्चैर्जहास। तदेवहेलनं विरिञ्चो दृष्ट्वा "त्वम् असुरस्य भार्या भव" इति तां शशाप। अनुपदं पश्चात्तापं प्राप्तया तयाऽनुनीतो देवः "असुरभार्येति प्रथा केवलं तव भवतु। वस्तुतोऽसुरस्त्वां न स्पृशतु। तव भर्ता आगत्य यावत्त्वां नेष्यति तावत्त्वम् असुरगृहे वस" इति शापमोक्षं ददौ।

कदाचिद्विमानेन संचरमाणः शम्बरोऽसुरः रतिं दृष्ट्वा तां विमानमारोप्य स्वगृहं नीत्वा अन्तःपुरं न्यवेशयत्। तत्र महानसाधिकारे शम्बरेण निरूपिता सा आजन्मसिद्धया वैष्णव्या मायया तं वञ्चयित्वा शम्बरनिकटे स्वप्रतिकृतिं निर्माय प्रेषयामास। सोऽसुरो भ्रान्तस्तां प्रतिकृतिं रतिं मन्यमानस्तया सह रेमे। इत्थं तं वञ्चयन्ती रतिर्देवी शम्बरगृहे मायावतीति नाम्ना सुखमुवास।

एवं स्थिते ईश्वरानुग्रहेण रुक्मिणी गर्भिणी बभूव । तस्या गर्भात् पूर्वम् महेश्वरदग्धः कामदेवोऽजनि । स एव प्रद्युम्न इति विख्यातः सर्वगुणेषु पितुः सदृशः पुत्रोऽभवत् ।

रतिदेवीं तद्भर्त्रा संयोजितुकामो देवर्षिर्नारदः शम्बर समीपं गत्वा "राजन्! किं निर्विचारः शेषे? अन्तिके आगतं मृत्युं न वेत्सि? असुरकुलधूमकेतोः श्रीकृष्णस्य पुत्रस्तव वधायोत्पन्नः; तं मोपेक्षस्व । यत्कर्तव्यं तत्कुरु ।" इत्यकथयत् ।

मायावी शम्बरः इतराविदितं रुक्मिण्याः सूतिकागृहं प्रविश्य सूत्यनन्तरं सप्तम्यां रात्रौ तं शिशुं प्रद्युम्नम् अपाहरत् । स तस्य शिशोः सौकुमार्यम् वीक्ष्य स्वयं तं हन्तुमनिच्छन् "एनं समुद्रे प्रास्यामि दैवाद्यद्भवति तद्भवतु" इति विचिन्त्य उदधौ क्षिप्त्वा स्वगृहमगच्छत् । तत्रत्यः कश्चन महान्मत्स्यः तं निजगार ।

परेद्युः कैवर्तैर्मत्स्येषु गृह्यमाणेषु गिलितशिशुर्मत्स्योऽपि गृहीतः । शम्बराय तं मीनं कैवर्ता उपायनं ददुः । सूदास्तं मत्स्यं स्वधितिना यदा खण्डयन्ति तदा तदुदरे सूर्यसदृशप्रभं कुमारं दृष्ट्वा राज्ञे न्यवेदयन् । दैवेच्छया विस्मृतपूर्वेद्युर्वृत्तान्तः शम्बरः अनपत्यां मायावतीमाहूय देवदत्तामिमं शिशुं पुत्रवत्पालयेत्यदात् ।

पूर्वमेव नारदात् विदितस्वभर्तृवृत्तान्ता मयावती महता हर्षेण तं शिशुं रसायनाद्यैः समवर्धयत्। मायावतीं मातरं मन्यमानः प्रद्युम्नः तद्दत्तरसायनादिसेवनेन चतुर्भिरेव वत्सरैः षोडशवर्षदेशीयो युवा अभूत्। कदाचित्स्वहावभावविलासादिकं प्रदर्शयन्तीं मायावतीं दृष्ट्वा क्रुद्धः प्रद्युम्नः "अम्ब! किमेवं मयि त्वं मातृभावं विहाय कामुकीभावमवलम्बसे" इत्यवदत्।

तच्छ्रुत्वा रतिरवदत् "भवान्नारायणसुतः; तव माता रुक्मिणी; त्वं पूर्वजन्मनि कामदेवः। अहं तव पत्नी रतिः; ब्रह्मशापात् असुरस्यास्य वशे अनपगतसच्चरित्रा तिष्ठामि। नाहं तव माता; नाप्येतस्य भार्या। न चायं पापस्तव पिता। किन्त्वयम् अस्माकं सहजशत्रुरसुरः। एष त्वां जननात्सप्तमेऽहनि अपहृत्य उदधाववाक्षिपत्। त्वां कश्चन मत्स्योऽग्रसत्। तदुदरादस्माभिस्त्वं लब्धः। तव माता तवादर्शनेन विषीदति। एनं शत्रुं जहि। आवां स्वगृहं गच्छावः" इति।

ततः सा तस्मै सर्वाः अस्त्रशस्त्रादिविद्याः वैष्णवीर्मायाविद्याश्च ददौ। स च शम्बरमभ्येत्य संयुगाय समाह्वयत। तस्य दुर्वचोभिरधिक्षिप्तः शम्बरः गदां गृहीत्वा युद्धाय तस्थौ। प्रद्युम्नः भार्यया दत्तां कालायसमयीं गदामादाय तेन प्रत्ययुध्यत। तस्मिन्युद्धे कार्ष्णिः स्वगदया शत्रोर्गदां चूर्णयामास। गदया हीनः शम्बरः अनेकाः आसुरीर्मायास्तस्मिन्प्रायुङ्क्त। प्रद्युम्नः तास्सर्वाः स्वमाययाऽपोह्य असिना तस्य शिरोऽपाहरत्। द्युलोकचारिणस्सर्वे देवास्तं दिव्यैः पुष्पैरवकीर्य तुष्टुवुः।

ततः प्रद्युम्नः भार्यया सह आकाशमार्गेणागत्य रुक्मिण्या अन्तःपुरं प्राविशत् । तत्रत्याः स्त्रियः श्रीकृष्णसदृशं तं दृष्ट्वा अयं कृष्ण इति मत्वा तत्रतत्र निलिलियिरे । ततो रुक्मिणी श्रीकृष्णाद्वैलक्षण्यं तस्मिन्दृष्ट्वा "कोन्वयं भवेत्? आहोस्वित् मम पुत्र एव भवेद्वा?" इति अचिन्तयत् । अत्रान्तरे नारद आगत्य सर्वमपीमं वृत्तान्तं श्रीकृष्णायाकथयत् । तच्छ्रुत्वा श्रीकृष्णः देवकी वसुदेव. बलभद्रः अन्याश्च श्रीकृष्णपत्न्यः तौ दम्पती द्रष्टुमागच्छन् । रुक्मिणी प्राप्तयौवनं पुत्रं स्नुषां च परिष्वज्य मुदं लेभे । नष्टं प्रद्युम्नं आगतमाकर्ण्य द्वारका वासिनः सर्वेऽपि जनाः तुतुषुः । अनया कथया "भाविचेन्न तदन्यथा । जीवत्यनाथोऽपि वने विसर्जितः ।" इत्याभाणकद्वयं सत्यमेवेति ज्ञायते ॥

॥ प्रद्युम्नचरित्रं संपूर्णम् ॥

---

## स्यमन्तकोपाख्यानम्,

### सत्यभामाजाम्बवत्योर्विवाहश्च ।

---

आसीत् वृष्णिवंशे सत्राजिन्नाम राजा । स बहुकालं सूर्यस्य प्रीत्यर्थम् तपस्तप्त्वा तस्य प्रसादेन स्यमन्तकं नाम मणिं लेभे । यस्य गृहे स मणिः तिष्ठति तस्मै अष्टभारतुलितं सुवर्णम् दिनेदिने ददाति । स मणिः यस्मिन्देशे तिष्ठति

तद्देशस्थानां मारिकाद्य उपद्रवा न जायन्ते। अनावृष्टिभयं न भवति। तादृशं मणिं कण्ठे धारयन् सत्राजित् सहस्रांशुरिव व्यरोचत।

कदाचिच्छौरिः तं मणिं सत्राजितमयाचत। द्रव्यलोभेन स तं श्रीकृष्णाय अदत्वा भ्रात्रे प्रसेनाय प्रादात्। एकदा प्रसेनः तं मणिं कण्ठे धृत्वा हयमारुह्य मृगयायै वनमगच्छत्। तत्र कश्चन सिंहः प्रसेनं हत्वा तं मणिं गृहीत्वा गतः। ततो मणिकण्ठं सहस्रांशुवद्विरोचमानं केसरिणम् ऋक्षराजो जाम्बवान्दृष्ट्वा तं निहत्य मणिं गृहीत्वा स्वस्य गुहां प्रविवेश। तत्र तं मणिं बालकस्य डोलायां क्रीडनं चकार।

वनादनागतं भ्रातरं वीक्ष्य सत्राजित् "कृष्णेन मणिलोभेन प्रसेनो हतः।" इति रहसि स्वजनेष्वब्रवीत्। इमं वृत्तान्तं जनाः कर्णेकर्णे अजल्पन्। वासुदेवः आत्मनः प्राप्ताया अकीर्तेर्मार्जनाय प्रसेनं विचेतुं तद्धयस्य खुरपदवीम् अनुसृत्य कतिपयैः जनैः सह वनं गतः। तत्र कस्मिंश्चित्पर्वते मृगेन्द्रेण हतम् अश्वं प्रसेनं च सर्वे ददृशुः। तस्मात्प्रदेशात् सिंहपादलाञ्छनमनुसृत्य सर्वेषु गच्छत्सु केनचिद्भल्लूकेन हतं सिंहं ददृशुः। तन्मार्गेण गतास्ते अन्धकारेण निबिडां कांचन गुहाम् अपश्यन्।

श्रीकृष्णः स्वसहायभूतान् बहिः स्थापयित्वा ऋक्षेण प्रविष्टं बिलं प्राविक्षत्। तत्र सुदूरं गत्वा ऋक्षराजस्य जाम्बवतो गृहं प्रविष्टः श्रीकृष्णः प्रथमकक्ष्यायां डोलायां रुदन्तं बालकं,

"सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक! मारोदीः तव ह्येष स्यमन्तकः ॥"

इति श्लोकमुक्त्वा डोलां संचालयन्तीं धात्रीं चापश्यत् । सा धात्री अपूर्वम् तं नरं दृष्ट्वा भयेन चुक्रोश। जाम्बवांस्तच्छ्रुत्वा क्रुद्धः सन् तत्रागत्य कस्त्वमित्यपृच्छत् । अस्मदीयोऽयं मणिः तं त्वमपहृतवानासि तस्मात्तं मह्यं देहि" इति दाशार्होऽवदत् । "स्वबाहुबलेनार्जितमिमं मणिं न तुभ्यं दास्ये गम्यतां यथागतम्" इति जाम्बवानवदत् । ततस्तयोर्युद्धमभवत् ।

एवं स्थिते श्रीकृष्णस्य परिजनाः द्वादश अहानि बिलाद्बहिः प्रतीक्ष्य तस्य प्रत्यागमनमदृष्ट्वा दुःखिनाः स्वपुरं ययुः । रुक्मिणीदेवी देवकी वसुदेवः बलभद्रः अन्ये सुहृदश्च बिलात् श्रीकृष्णस्य अनिर्गमं श्रुत्वा दुःखिताः सत्राजितम् अशपन् ।

अत्रान्तरे श्रीकृष्णः जाम्बवता सह अष्टाविंशति अहानि द्वन्द्वयुद्धं चकार। पुण्डरीकाक्षस्तं अधः पातयित्वा तस्यवक्षसि उपविश्य मुष्टिना प्राहरत् । केनाप्यपराजितो जाम्बवांस्तस्मिन्द्वन्द्वयुद्धे इत्थं क्षीणसत्वः खिन्नगात्रो महान्तं श्रमं प्राप्य स्वाराध्यं रामदेवं दध्यौ । "राक्षसकुलनाशक! भक्त-

जनरक्षक! स्वामिन् राम! अद्याहं केनापि अपूर्वेण नरेण पराजितो म्रिये इदानीं मोपेक्षस्व; मां पाहि।" इति प्रार्थयामास। तदा श्रीरामादभिन्नः श्रीकृष्णः रामरूपेण तस्य दृग्विषयो बभूव। "त्वं पुराणपुरुषो विष्णुः त्वमेव पूर्वम् रामरूपेण अवतीर्य रावणम् अवधीः। त्वमेव ब्रह्मरुद्रेन्द्रादीनां देवानामपि स्रष्टा। मोहात् तव स्वरूपमज्ञात्वा मया कृतम् अपराधं क्षमस्व।" इति ऋक्षराजो भगवन्तं क्षमापयित्वा श्रीकृष्णं परिणेतुमेवावतीर्णाम् महालक्ष्म्यवतारभूतां जाम्बवतीं पाणिं ग्राहयित्वा स्यमन्तकं मणिं च भगवते ददौ।

नववरवेषः श्रीकृष्णः सूर्यया[1] जायया जाम्बवत्या सह मणिं कण्ठे आमुच्य द्वारकामगात्। वसुदेवाद्याः सर्वे श्रीकृष्णं दृष्ट्वा दुर्गाया अनुग्रहेण उज्जीवितं मेनिरे। श्रीकृष्णः सभार्यां सत्राजितं समाहूय बन्धुजनानां संनिधौ मणेरागमनप्रकारं कथयित्वा तद्धस्ते स्यमन्तकं ददौ। सत्राजित् श्रीकृष्णे आरोपितेन अपयशसा अतिव्रीडितः सन् "किं मया कृतं चेत् कृष्णो मयि अनुग्रहं कुर्यात्, जनाश्च मां न शपेयुः" इत्यालोच्य स्त्रीरत्नभूतां दुहितरं सत्यभामां श्रीकृष्णेन विवाहयामास स्यमन्तकं मणिवरं च तस्मै उपहारमदात्। देवश्च तां यथाविधि उपयेमे॥

॥ विवाहद्वयम् संपूर्णम् ॥

---

१. सूर्या = नवोढा।

# नरकासुरवधः ।

---

अस्ति प्राग्ज्योतिषं नाम सर्वसमृद्धिमत्पुरम् । तत्र नरको नाम आसुरस्वभावो राजाऽऽसीत् । स यदा भगवान् वराहावतारमकरोत् तदा भूदेव्यां तस्मात् उत्पन्नः । महाबलिष्ठः स वरुणस्य श्वेतच्छत्रं, इन्द्रस्य मणिपर्वतं, अदितिदेव्याः कुण्डले च अपजहार । तं प्रतिकर्तुमसमर्थो देवेन्द्रः द्वारवतीं सकलभाग्यवतीमागत्य नरकासुरस्य दौरात्म्यं श्रीकृष्णायाऽकथयत् । गोविन्दो मघवन्तम् आश्वास्य, 'नरकम् अचिरादेव हनिष्यामि' इति उक्त्वा तं प्रेषयामास ।

तस्य गमनानन्तरं अच्युतः सत्यभामया सह गरुडमारुह्य प्राग्ज्योतिषं ययौ । तस्य पत्तनस्य गिरिदुर्गः, शस्त्रदुर्गः, जल-अग्नि-अनिलदुर्गाश्च अभूवन् । तान् सर्वाञ्शौरिः गदया चक्रायुधेन सायकैश्च भङ्क्त्वा पुरं प्रविश्य पाञ्चजन्यं दध्मौ । शङ्खध्वनिश्रवणेन जले सुप्तो मुरनामा नरकस्य मन्त्री उत्थाय त्रिशूलं गृहीत्वा श्रीपतिना सह अयुद्ध्यत । तदा सः गदया मुरप्रयुक्तं त्रिशूलं छित्वा तमवधीत् । तदारभ्यैव श्रीकृष्णस्य "मुरारिः" इति नाम अजनि । ततो नरकस्य पीठप्रभृतयः चमूपतयः युद्धाय तस्थुः । तान्सर्वान्क्षणेन मुरारिर्यमलोकमनयत् ।

धरासुतः सेनापतीनां नाशं श्रुत्वा स्वयं सुप्रतीकाभिधाने क्षीरोदाधिजे गजे स्थितः अनेकैः तथाविधैर्गजैः, महत्या सेनया च सहितः मुरमथनेन सह युद्धायागच्छत् । सत्यभामां दृष्ट्वा भौमोऽतीव कुपितः कृष्णसत्यभामागरुडानामुपरि शरवर्षमवाकिरत् । गरुडः दम्पती उदूह्य भौमस्य गजान् तुण्डेन पक्षाभ्यां नखैश्च व्यदारयत् । तार्क्ष्योपद्रुताः नरकस्य गजाः सैनिकाश्च पलायन्त । सेनायाः पराभवेन नितरां क्रुद्धो नरकः तोमरान् नागचान् त्रिशूलं च प्रायुङ्क्त । तानि सर्वाण्यायुधानि छित्वा चक्रायुधेन तस्य शिरो जहार देवकीतनयः ।

ततो नगरीं प्रविष्टः धरया स्तुतः शौरिः नरकस्य पुत्रं भगदत्तं राज्येऽभिषिच्य मणिपर्वतम् इन्द्राय, श्वेतच्छत्रं वरुणाय च संप्रेष्य भौमस्यावरोधं प्राविशत् । तत्र भौमेन बलादपहृताः षोडशसहस्राणि अनूढा राजकन्यकाः आसन् । ताः सर्वाश्चारुसर्वाङ्ग्यः श्रीकृष्णं वव्रिरे पतिम् ।

ताः सर्वाः नरकान्तकः शिबिकाभिः द्वारकां प्राहिणोत् । भगदत्ताय सुप्रतीकमेकमेव गजं दत्वा अवशिष्टान् चतुष्षष्टिं गजान् स्वपुरीं प्रैषयत् । धरादेव्या दत्ते अदित्याः कुण्डले गृहीत्वा मात्रे दातुं भार्यया सह स्वर्गमगच्छच्छ्रीकृष्णः । श्रीकृष्णः आगच्छतीति विज्ञाय दिवौकसः अभिमुखं गत्वा अर्घ्यपाद्यादिभिः तं संपूज्य इन्द्रभवनमानयन् । श्रीकृष्णः

सत्यभामा च इन्द्रशचीभ्यां पूजितौ सन्तौ अदित्याः भवनम् अगच्छताम् । श्रीकृष्णो मातरमनमत् । चिरादृष्टं सुतम् अदितिः आशीर्भिः अभ्यनन्दत् । सत्यभामा च कुण्डले श्वश्र्वाः पादयोः समर्प्य प्रणनाम । सा स्नुषामालिङ्ग्य "दीर्घायुर्भव कल्याणि!, पत्युस्त्वं प्रीतिपात्रं भव ।" इति आशिषोऽवदत् ॥

---

## पारिजातापहरणम् ।

तौ दम्पती अदित्या अनुज्ञातौ वैनतेयमारुह्य प्रतस्थाते । मध्येमार्गम् हृद्यगन्धं मनोरमं नन्दनवनं दृष्ट्वा देवी दयितं प्राह । "केशव! अस्मिन् प्रविश्य मुहूर्तम् विहर्तुम् मम इच्छाऽस्ति" इति । एवं दयितया प्रार्थितो देवः गरुडादवरुह्य शक्रकिंकरैः पालितं वनं प्रविवेश । सत्यभामा तत्र अनेकान् मनोरमान् अभ्रंलिहान् वृक्षान्, सुगन्धिपुष्पाढ्या लताः उत्पलवतीर्वापीः, फलभारनतान्वनस्पतीन्, प्रसूनरजसा सुरभीणि शुचिजलानि तटाकानि चापश्यत् । तत्र कंचन विचित्रम् अदृष्टपूर्वम् महाद्रुमं देवी दृष्ट्वा "पश्य प्राणनाथ! अस्य मूलानि प्रवालानि, बुध्नोऽस्य जातरूपम्, पर्णानि इन्द्रनीलानि, पुष्पाणि माणिक्यानि, वेदिका वैदूर्यम्, मुक्ताफलानि फलानि, कुसुमकिंजल्कानि वज्राणि, किंनामधेयोऽयं तरुः? एतादृशं

महीरुहम् अहं कुत्रापि नापश्यम्; अयं मम मनो हरति । अयं विटपी अस्मत्पुरीं नेतव्यः । 'रुक्मिण्याः, जाम्बवत्याः मित्रविन्दायाः, भद्रायाः, लक्ष्मणायाः नीलायाश्च त्वमेव मम दयिता' इति मां अनवरतं वदसि, तद्यदि परमार्थः, न तु परिहासनिजल्पितं तर्हि इमम् उत्पाट्य मम निष्कुटे रोपय ! तेनाहं मम सपत्नीनां मध्ये अधिकं शोभेय । तव वाक्यं सत्यमिति च श्रद्धास्ये" इत्यवदत् ।

प्रिये! सत्यं त्वं सर्वाभ्योऽपि मम वल्लभतमैव । अमृतमथनकाले क्षीरोदधेरुत्पन्नोऽयं तरुः । मम आज्ञयैव इन्द्र इमं गृहीतवान् । भद्रे! न केवलम् अयं शोभनदर्शनः, अपि तु महान्तोऽस्य गुणाः । अयं मनसि संकल्पितान् सर्वान् कामान् वितरति । अत एव अस्य "कल्पतरुः" इति नाम । तस्मादयं स्वर्गात् भुवं नेतुं न शक्यः । यद्यावाम् एनमपहृत्य गच्छेव तर्हि इन्द्राद्याः अष्टौ दिक्पाला युद्धार्थमागच्छेयुः । एकस्य मम बहुभिः सह जन्ये कीदृशी विपत् संभवेत्वमेव युद्ध्यस्व"। इति सात्राजितीमवदद्गदाग्रजः ।

कंसारे! किमेभिर्व्यलीकैर्वचनैर्माम् विप्रलभसे? तव बलातिशयं जानती अहं न विभीयाम् । युद्धं वा भवतु, अन्यद्वा भवतु, उत्पाटय तरुम्, आरोपय गरुडम्, शब्दापय पाञ्चजन्यम् प्रतिष्ठस्व द्वारकाम्" इति सत्यभामा अवदत् ।

इत्युक्तः सत्यया कृष्णःताननादृत्य रक्षकान्। उत्पाट्यारोपयामास पारिजातं गरुत्मति। ततो निवारयामासुर्गोविन्दं वनपालकाः। केचिद्द्रुततरं गत्वा देवेन्द्राय न्यवेदयन्। "कृष्ण! त्वं देवेन्द्रस्य अनुज इति त्वां वयं मानयन्तो वनं प्रवेष्टुमन्वजानीम। यदि इमं कामतरुं नयसि तर्हि क्षेमेण नगरीं न प्राप्स्यसि" इति केचित्कृष्णमवदन्।

शच्या सह एकासने उपविष्टं पाकशासनं केचित् वनरक्षका गत्वा "सुरेन्द्र! वृत्रहन्! सत्यभामा नन्दनवनं भर्त्रा सह प्रविश्य इन्द्राणीं बहु विनिन्द्य पारिजातमुत्पाट्य भुवं नयति"। इति अवदन्। इदमप्रियं वाक्यं श्रुत्वा दण्डाहत उरग इव क्रुद्धः पार्श्वस्थायाः भार्याया मुखं च वीक्ष्य भटान् युद्धसंनाहाय आदिशत्। संनाहभेरीश्रवणानुपदम् अग्निः यमः निर्ऋतिः वरुणः वायुः कुबेरः ईशानश्च स्वानि वाहनान्यारुह्य सैन्यैः सह युद्धाय सज्जा आगताः।

पृष्ठतः आपततः दिक्पालानालोक्य श्रीकृष्णः "प्रिये! न मे हितां वाचं त्वमग्रहीः। इमे वृन्दारकाः तव प्राघुणिकाः प्राप्ताः। यत्कर्तव्यं तत्कुरु" इत्यवदत्। तच्छ्रुत्वा सत्यभामा श्रीकृष्णहस्तात् शार्ङ्गमादाय तेषां अभिमुखीभूय नदद्भिस्तैः प्रयुक्तान्बाणान् शार्ङ्गप्रयुक्तैः शिलीमुखैः चिच्छेद। ततो वैश्रवणः सत्यभामाया उपरि स्वर्णपुंखाञ्शरानमुञ्चत्। सा देवी तान्बाणान् समीपे अप्राप्तानेव नाराचैः कर्तित्वा पुनः

पञ्चभिः शिलीमुखैः तं जठरे विव्याध। अनिविद्धः सः हरिप्रियां भल्लैः प्राहरत्। सा तान् पुनः अर्धमार्गे छित्वा अर्धचन्द्रेण बाणेन पौलस्त्यस्य महत् धनुः चिच्छेद। धनश्वरः क्षणात् अन्यं चापमादाय सज्जं चकार। तमपि सा चिच्छेद। एवं तस्य बहूनि धनूंषि सा न्यकृन्तत्। ततो देवीं हन्तुं कुबेरः मुद्गरं प्राहिणोत्। अन्तिकमागतं मुद्गरं मुरारिर्वामेन करेण गृहीत्वा उच्चैर्जहास "अये! त्वं श्लाघनीयासि, त्वं क्षत्रियाण्येवासि" इति तां प्रशस्य समाश्लिष्यत्। धनदो व्रीडितः युद्धादपाक्रामत्।

ततो वरुणः पाशहस्तः पुरतस्तस्थौ। तदा कृष्णवाहस्य गरुडस्य, वरुणस्य च घोरं युद्धम् समभूत्। वरुणः गरुडस्य कण्ठे पाशं विन्यस्य तं विचकर्ष। पन्नगारिपुः पक्षाभ्यां पाशं निरस्य तस्य वाहनभूतं नक्रं नखैर्गृहीत्वा समुद्रे प्राक्षिपत्। वरुणः स्ववाहने नष्टे महता प्रयत्नेन पाशं संपाद्य पदातिरेव युद्धात् अपाद्रवत्। ततः अग्निः मारुतः यमः निर्ऋतिश्च श्रीकृष्णेन युद्ध्यमानाः पराजिताः। तान्सर्वान्पलायितान्वीक्ष्य वृषभवाहनः शङ्करः श्रीकृष्णमभ्यद्रवत्। लोकत्रिकगुरू तावुभौ घोरं कदनं चक्राते। गौरीशः लक्ष्मीशे त्रिशूलं प्राहिणोत्। वैकुण्ठः गिरिशे कौमोदकीं गदां चिक्षेप। ते गदात्रिशूले मध्येमार्गम् परस्परं प्रहृत्य अम्बुधौ पेततुः। पुनः कौमोदकी श्रीकृष्णहस्तं, त्रिशूलं शङ्करं च प्रापतुः। गरुडः द्वाभ्यां पक्षाभ्यां चञ्चुकोट्या नखैश्च वृषभमभ्यर्दयत्। पुनः

शूलिना चोदितम् वृषभं वैनतेयः पद्भ्यां विषाणे गृहीत्वा सुदूरं चिक्षेप । वृषभवाहनः प्रमथैः सह कैलासं जगाम ।

एवं सर्वान्पराजितान् शक्रो वीक्ष्य प्रगृहीतशरासनः सन् ऐरावतमारुह्य कृष्णमभ्यद्रवत् । तावुभौ भ्रातरौ अन्योन्यस्मिन् बाणगणानमुञ्चताम् । क्षीणसत्वो मघवा ऐरावतं तार्क्ष्यम् प्रति प्रेषयामास । पाकशासनप्रेषितो हस्ती गरुडं चतुर्भिर्दन्तैः घट्टयामास । पक्षीश्वरश्च ऐरावतं पक्षाभ्यां पद्भ्यां च प्राहरत् । इन्द्रो वज्रं गृहीत्वा वृषाकपिं प्रजहार । समीपे आगतं वज्रायुधं वामेन हस्तेन गृहीत्वा श्रीकृष्णः प्रजहास । सुरपतिः निरायुधः अर्दितवाहश्च भूत्वा व्रीडया रणात् पराद्रवत् । पलायमानं तं दृष्ट्वा सत्यभामा प्रहस्य "शक्र ! एहि! मा निवर्तस्व, पौलोम्या वल्लभस्य तव पलायनं नोचितम् । ऐश्वर्यमत्ता पौलोमी रणपराजितं त्वां सद्यः अवमंस्यते ।" इत्यब्रवीत् ।

इत्थं देव्याः सोपालम्भं वचः शक्रो निशम्य "देवि! यद्यप्यहं तव ज्येष्ठो देवरः, तथापि त्वं सर्वजगतां जननी महालक्ष्मीः; तव भर्ता तु सर्वजगज्जनकः परमपुरुषः । जगतः पितरौ युवां विरुद्ध्य को वा विजयी भवेत् । युवाभ्यां पराजयो मम भूषणमेव ।" इति देवीमुक्त्वा कृताञ्जलिर्वासुदेवं प्रणम्य "पुण्डरीकाक्ष! अज्ञानेन मया कृतमपराधं क्षमस्व । मयि विद्यमानं सर्वम् त्वयैव दत्तम् । ऐरावतः, कुलिशम्, पारिजातः, देवराज्यम्, इयम् अमरावती, एतानि सर्वाणि

त्वदधीनानि, एतेषु यद्यद्रोचते तत्सर्वम् भगवान्द्वारकां नयतु” इति कृष्णमब्रवीत् ।

“शक्र! त्वया कश्चिदपि अपराधो न कृतः” इति भगवानुवाच। पुनरिन्द्रः “श्रीकृष्ण! तव पैतृष्वसेयः स्यालश्च, मत्पुत्रः अर्जुनः भारते युद्धे राधेयात् रक्षितव्यः”। इति भूयोभूयः प्रार्थयामास । ततः पुरन्दरः वज्रायुधं लब्ध्वा पुरं ययौ ।

गरुडः श्रीकृष्णं सत्यभामां पारिजाततरुं च वहन् लीलया द्वारकां ययौ ।

तत्र श्रीकृष्णः सभां प्रविश्य आहुकं वसुदेवं बलभद्रं च प्रणम्य नरकासुरवधाधिकं सर्वम् वृत्तान्तमकथयत। आनीतं पारिजातं सत्यभामायाः प्राङ्गणे मणिमये कुट्टिमे स्थापयामास। देवकीप्रभृतिकाः मातरः, रुक्मिण्याद्याः सप्त महिष्यश्च आगत्य पारिजातं ददृशुः। प्राग्ज्योतिषपुरात् प्रेषिताः षोडशसहस्राणि राजकन्याः नानागारेषु निवेश्य स्वयं तावन्ति रूपाणि स्वीकृत्य एकस्मिन्नेव मुहूर्ते तासां पाणीन् अग्रहीत् ।

यथा श्रीकृष्णस्य सर्वत्र जयः कल्याणपरंपरा च तथा एतत्कथापाठितॄणामपि स्यात् ॥

---

# कुचेलोपाख्यानम् ।

आसीन्कुचेल इति नाम्ना कश्चित ब्राह्मणपुत्रः । यदा श्रीकृष्णः अवन्तीपुरवास्तव्यात् सान्दीपिन्याचार्यात् विद्या अभ्यास्यत् तदा कुचेलोऽपि श्रीकृष्णेन सह विद्याभ्यासमकरोत्। तस्मात्स तस्य सतीर्थ्योऽभूत् । कृतसमावर्तनः स ब्राह्मणः स्वगृहं गत्वा स्वसदृशीम् अव्यङ्गां सुशीलाम् भार्याम् उदवहत् । तस्य द्वित्राः पुत्राः तावत्यो दुहितरश्चाभवन् । सः उञ्छवृत्त्या गृहस्थाश्रमविहितानि पञ्चमहायज्ञादीनि कर्माणि कुर्वाणः जायां पुत्रांश्चापोषयत् । धनिकैर्दरिद्राणामुपयोगाय मार्गवृक्षेषु निक्षिप्ताः कन्था आनीय भार्यायै ददाति । सा पञ्चषान् पटखण्डान् मेलयित्वा स्वयं परिधत्ते; पुत्रीणां च अर्धोरुकं करोति । तथाऽपि सा संतुष्टैवासीत् । एवं गच्छति काले कदाचित्सा-दैवयोगेन स्वशिशूनां दौर्भाग्यं दृष्ट्वा विषण्णाऽभूत् । ततः सा भर्तारमेत्य नाथ! पश्यास्मद्दारकान् । एतेषां केशेषु लेपनाय प्रसृतिमात्रमपि तैलं गृहे नास्ति । निःस्नेहा एतेषां मूर्धजा आकाशे डयन्ते। एते पिशाचा इव दृश्यन्ते। एतान्पश्यतस्तव कुतो वा नोत्पद्यते दया?। यस्य कस्य वा प्रभोः सकाशं याचनार्थम् गत्वा विपुलं धनम् आनेतुं त्वं शक्तः । त्वं तु सान्दीपिन्याचार्यात् चतुरो वेदान् चतुष्षष्टिं कलाश्च अधीतवान् । एतादृशं त्वां सर्वेऽपि संमानयेयुः । अपि च त्वमेवासकृद्वदसि "मम सतीर्थ्यः श्रीकृष्णः । सः लक्ष्मीपतेरवतारभूतः । तेन

आचार्यान्यै पूर्वम् समुद्रे पतित्वा मृतः पुत्रः यमलोकादानीय दत्तः। स एव मोक्षदाता। किमुत तत्कृपया ऐहिकं सर्वैश्वर्यम् भवेदिति" इति। "तस्मात् श्रियः पत्युः सकाशं गच्छ। ब्राह्मणेषु प्रीतिमान् सः बाल्यसखाय तुभ्यं भूरि द्रव्यं दद्यात्"। इति भार्याया वचनं श्रुत्वा 'अनेन वा कारणेन मम चिरात् तस्य मुकुन्दस्य दर्शनं भविष्यति' इति संचिन्त्य, अये कल्याणि! भगवतः खाद्यम् उपायनं गृहे किमप्यस्ति?, इति पप्रच्छ। भर्ता श्रीकृष्णसकाशं गमिष्यतीति हर्षेण सा पृथुकतण्डुलानां चतुरो मुष्टीन्याचित्वा कन्थायां बद्ध्वा भर्त्रे प्रादात्। स ब्राह्मणः तदुपायनं गृहीत्वा प्रातिष्ठत। मध्यमार्गम् गच्छन् सः 'दरिद्रस्य मम कृष्णसंदर्शनम् कथं स्यात्' इति यदाऽचिन्तयत्। तदा गगने गरुडध्वनिरश्रूयत। तादृशशकुनदर्शनेन इष्टसिद्धिरवश्यं भविष्यतीति निश्चित्य सः द्वारकां गत्वा तत्र अच्युतमहिषीणां षोडशसहस्रगृहाणां मध्ये अन्यतमं गृहं प्रविवेश। तद्गृहं तु शैब्याया मित्रविन्दाया आसीत्। तत्र प्रियया सह पर्यङ्के उपविष्टः श्रीकृष्णः आगच्छन्तं विप्रं दूरादेव विलोक्य तमभिगम्य दोर्भ्याम् परिगृह्य मञ्चे उपावेशयत्। शौरिः तस्य स्वागतं पृष्ट्वा भार्यया रजतपात्रे आनीतेन वारिणा विप्रस्य पादावक्षालयत्। स्वयं सर्वलोकपावनोऽपि देवः तस्य पादोदकं स्वशिरसा दधार। चन्दनागरुकुङ्कुमवासितेन गन्धेन तं लिलिम्प। शैब्या व्यालव्यजनेन तं विप्रं वीजयांचक्रे। अध्वगमनेन श्रान्ताय

तस्मै पातुं पानीयं, किंचिदुपहारं च ददौ। सभार्येण श्रीकृष्णेन एवं सभाजितं तं विप्रं दृष्ट्वा अन्तःपुरजनो व्यस्मयत।

श्रीकृष्णस्तं ब्रवीति "मित्र! आवयोर्विद्याभ्यासपर्यन्तं त्वां जाने। ततः स्वग्रामं गतस्त्वं सदृशीं भार्याम् उदवहः किम्?। तव धनेच्छा नास्तीति मम पूर्वमेव विदितम्। कामलम्पटोऽभूत्वा यावदर्थम् गृहे त्वं सज्जसे कच्चित्?। वर्णाश्रमोचितानि विहितकर्माणि आचरसि कच्चित्?। आवां बाल्ये गुरुकुले अवात्स्व खलु? तत्स्मरसि किम्?। तत्र कस्मिंश्चिद्दिने गुरुभार्यया चोदितावावां इन्धनानयनायारण्यं प्रविष्टावभवाव। तत्र अकालोत्पन्नेन सवातवर्षेण क्लिष्टावावां रात्रौ वन एवावसाव। परेद्यवि प्रातः आचार्यः आवाम् अन्विष्य आगत्य स्वगृहमनयत्। अस्मत्परिचर्यया तुष्टो गुरुर्नावनुजग्राह। मित्र! सत्यं वदामि गुरोरनुग्रहेणैवाहमेवं सुखी वसामि" इति। ब्राह्मणस्तच्छ्रुत्वा "श्रीकृष्ण! सर्वम् स्मरामि। यावच्छक्यं विहितमार्गेण गृहस्थाश्रमे वर्ते। सकलवेदप्रतिपाद्येन ब्रह्मस्वरूपिणा त्वया यो गुरुकुलवासः कृतः, यच्च गुरुप्रसादादियांस्तव महिमेति उच्यते, तत्सर्वम् लोकशिक्षणार्थमेव"। इत्यवादीत्।

एवं नानाविधाः पूर्वकथाः कथयन् श्रीनिवासः "मित्र! चिरादागतेन त्वया किमप्युपायनमानीतं किम? तव भार्यया किमपि प्रेषितमेव स्यात्। किमस्मिंश्चीरबन्धे वर्तते? इति

तत्स्वयमेवापहृत्य तद्बन्धनमवमुच्य अहो! एते पृथुकतण्डुलाः मह्यं परमं रुचिताः खलु; इत्युक्त्वा तेषामेकां मुष्टिं गृहीत्वा जघास। पुनर्द्वितीयां मुष्टिं यावद्गृह्णाति तावच्छैब्या त्वरितमागत्य ईश्वरस्य हस्तं स्वहस्तेन गृहीत्वा "आर्यपुत्र! एतावदलं अस्य द्विजन्मनः सर्वसमृद्धिं दातुम्। किंपुनर्द्वितीयेन?" इति न्यषेधत्।

श्रीकृष्णेन सह रात्रौ षड्रसोपेतमन्नं भुक्त्वा क्षीरं पीत्वा तेन सह हंसतूलिकातल्पे सुखमशेत कुचेलः। अपरेद्युः प्रभाते श्रीकृष्णः "गृहिणीं बालकांश्चासहायान्गृहे त्यक्त्वा तत्रात्र बहून् दिवसान् स्थितिर्नोचिता। अतः शीघ्रं गच्छ" इति अवदत्। "तदेव ममापि इष्टम्। अनुजानीहि मां गन्तुम्" इत्यापृच्छ्य विप्रः स्वग्रामं प्रति प्रतस्थे। अर्धमार्गम् आगतेन तेनालोचितम् "अहो दृष्टः खलु ब्राह्मणेष्वादरो लोकनाथस्य? दरिद्रतमं मां देवः स्वयमाश्लिष्टवान्। देव्याऽहं चामरेण वीजितः। इतरेषां दुर्लभं तस्य दर्शनं मम जातम्। एतावदलं मम जन्मनः साफल्याय। तथाऽपि मम भार्याया वाञ्छा केवलं न पूरिता। तत्राहं कारणं मन्ये 'अधनायास्मै धनं दत्तं चेन्मत्तस्सन्नयम् आत्मानं न स्मरेत्।' इति करुणया मह्यं धनं स्वल्पमपि न दत्तवान्। भवतु: कथंचिज्ज्ञानोपदेशेन गृहिणीं समाधास्ये" इति।

ततो यदा स्वस्याग्रहारमागच्छति तदा स्वगृहस्य स्थाने अदृष्टपूर्वम् हर्म्यम् ददर्श। तद्दृष्ट्वा "कस्येदं सुधानिर्मितं महद्वेश्म? कुत आगता इमा वाप्यः? केन वा निर्मितानि इमानि उद्यानानि? कुत्र वा गतं मदीयं कुटीरम्?" इत्यचिन्तयत्। एवं मीमांसया तस्य हर्म्यस्य पुरतः तिष्ठन्तं तं श्रीरिव रूपिणी निष्ककण्ठीभिर्दासीभिः परिवृता तस्य भार्या गृहाद्बहिरागत्य दासीभिर्नीराजनं कारयित्वा तमन्तः प्रावेशयत्। इन्द्रभवनसदृशं सर्वसमृद्धिमत्स्वभवनं, बहुभिर्भूषणैः स्वलंकृतां गृहिणीं, निष्ककण्ठीः पीताम्बरं वसानाः स्वपुत्रीः, ग्रैवेयकधारिणः सुवसनान्पुत्रांश्च वीक्ष्य, "अहो! श्रीपतेः श्रीकृष्णस्य प्रसाद एव कारणम् एतस्याः समृद्धेः। यदवदन्नेव सः महतीं संपदं मे दत्तवान् एतदेव खलु तस्य महत्त्वम्?" इति विसिष्मिये।

एवं श्रीनिवासकृपया प्राप्तमहैश्वर्यः स कुचेलः तदारभ्य "सुधामा" इति प्रसिद्धोऽभूत्। तस्मात् श्रीकृष्णभक्तानां दुर्लभं किञ्चन नास्ति। ऐहिकं पारत्रिकं च सर्वम् हस्तगतमेव॥

॥ सुधामचरित्रं संपूर्णम् ॥

---

## ॥ परीक्षिच्चरित्रम् ॥

---

आसीत्पञ्चसु पाण्डवेषु मध्यमः अर्जुनो नाम। तस्य भार्या सुभद्रा नाम भद्रभाषिणी श्रीकृष्णभगिनी। तत्पुत्रो

अभिमन्युः पितरं मातुलं च शौर्येऽनुससार । सः षोडशवर्ष देशीय एव भारतयुद्धे अनेकाञ्शत्रूनवधीत् । तत्पराक्रममसहमानाः द्रोणकर्णजयद्रथाद्याः प्रत्येकं तं जेतुम् असमर्थाः सन्तः मिलित्वा तमभिमन्युम् अधर्मेण जघ्नुः । तदानीं तद्भार्या विराटराजपुत्री उत्तरा अन्तर्वत्न्यभवत् । भीमसेनस्य गदाप्रहारेण मृतस्य दुर्योधनस्य तृप्त्यर्थम् द्रोणपुत्रोऽश्वत्थामा पाण्डवसन्ततिनाशाय ब्रह्मास्त्रं विससर्ज । तेनास्त्रेण पीड्यमान गर्भा उत्तरा श्रीकृष्णं शरणमगच्छत् । भगवांस्तं गर्भम् अस्त्रतो ररक्ष । तथाऽपि स शिशुर्मृत एव जज्ञे । तदा "यदि कश्चिदाजन्मब्रह्मचारी इमं मृतं शिशुं स्पृशेत्तर्हि अयं जीवेत्" इति अशरीरा वाणी नभसो बभूव । तां श्रुत्वा युधिष्ठिरः मृतं शिशुं देवव्रतेन स्पर्शयांचकार । तेन मृतस्य शिशोः कोऽपि विशेषो नाभवत् । ततो भीष्मः युधिष्ठिरमवदत् "मादृशानां किमपि मानसिकं चाञ्चल्यं कदाचित् स्यात् । अतो न वयं शुद्धा ब्रह्मचारिणः । वस्तुतो नित्यब्रह्मचारी तु श्रीकृष्ण एव । स यदीमं स्पृशेत् तर्हि अयमसंशयं जीवेत् ।

तद्वाक्यं श्रद्धाय धर्मसूनुः श्रीकृष्णं सस्मार । स्मृतमात्र एव वासुदेव आगत्य तं शवम् अस्पृशत् । स्पर्शनानुपदं स शिशुः रोदितुमारभत । युधिष्ठिरः तस्य शिशोः परीक्षित् इति नाम चकार । सः उत्तरकुमारस्य तनयाम् इरावतीम् उपयेमे । तस्यां तस्य जनमेजयाद्याश्चत्वारः तनया बभूवुः ।

स परीक्षित्कदाचिन्मृगयायै वनं गतोऽनेकान् दुष्टान् मृगानविध्यत्। तत्रैको मृगोऽर्धविद्धः प्राद्रवत्। परीक्षित् तस्य पृष्ठतो दूरं धावित्वाऽपि तं मृगमलभमानः पिपासार्तः कुत्रापि जलाशयं नापश्यत्। तत्रैकस्याः पर्णशालाया बहिः निमीलित-नयनं ध्याने स्थितं मौनव्रतधरं शमीकं नाम ऋषिम् औत्तरेयो दृष्ट्वा अयं मह्यं पानीयं दास्यतीति मत्वा "ब्रह्मन्! अहं पाण्डवानां प्रपौत्रः परीक्षिन्नाम चक्रवर्ती। आखेटे मया विद्धो मृगोऽत्र धावन्नागतः। तं कच्चिद्भवान् दृष्टवान्? नो चेत् विशुष्यतालवे मह्यं जलं वा पातुं ददातु"। इत्यवदत्।

असंप्रज्ञातसमाधौ स्थितः स मुनिर्न किंचिदपि प्रत्युवाच। स राजा "मुधा मीलितनयनोऽयं मुनिः 'अनेन क्षत्रियापशदेन मम किं भाव्यम्?' इति अभिप्रायेण मामवाजानात्" इति मत्वा कोपात् दूरं पतितं मृतमुरगं धनुष्कोट्या उद्धृत्य मुनेरंसे क्षिप्त्वा प्राचलत्। तस्यर्षेः पुत्रोऽतितेजस्वी शृङ्गी नाम सवयोभिः क्रीडन् आसीत्। सः तातं राज्ञा अवमानीतं शुश्राव। कोपाकुलितः सः "वृद्धस्य तपस्याभिरतस्य मम पितुः कण्ठे यः क्षत्रियापशदो मृतं सर्पम् समसृजत् तं राजानं परीक्षितं मद्वाक्यचोदितः सर्पराट् तक्षकः इतः सप्तमेऽहनि दशतु" इति शशाप। ततः स ऋषिकुमारः पितुः सकाशं गत्वा तथाविधं तं दृष्ट्वा तस्य कण्ठात् तमुरगं निष्कास्य समाधेरुत्थापनमार्गेण तमुत्थाप्य राज्ञे स्वदत्तं शापं पित्रेऽकथयत्।

शमीकः पुत्रं विनिन्द्य गौरमुखनाम्नः स्वशिष्यस्य मुखेन शाप वृत्तान्तं राज्ञे निवेदयामास। परीक्षिच्च वनात्प्रतिनिवृत्य नगरं गतः क्रोधात्स्वकृतेन ब्राह्मणापमानेन बहु पर्यतप्यत ।

अत्रान्तरे स राजा ऋषिशिष्यात् शृङ्गिदत्तं शापं श्रुत्वा महापराधिनि स्वस्मिन् ऋषिकुमारेण यः शापो दत्तः स युक्त एवेति अमन्यत। ततः स राजा पुत्रं जनमेजयं राज्येऽभिषिच्य यावच्छक्यं प्रतीकारस्य कर्तव्यत्वात् एकस्तम्भं सुरक्षितं सर्वैर-प्रवेश्यं प्रासादं गङ्गायां कारयित्वा स्वयं तत्रोपविश्य स्वरक्षणार्थं विषवैद्यान् मन्त्रसिद्धान्द्विजांश्चानाययामास । स्वभावतो भगवद्भक्तस्य प्रायोपविष्टस्य राज्ञस्तत्रोपदेशार्थम् आगतेन व्यासपुत्रेण शुकाचार्येण द्वादशस्कंधात्मकं श्रीमद्भागवतं सप्तसु दिवसेषूपदिष्टम् ।

दैवचोदितस्तक्षकः सप्तमेऽहनि प्रातः सहायभूतैः कति-पयैर्नागैः सह परीक्षितं दष्टुं ब्राह्मणवेषेण आययौ । दैवात्सः, धनाशया राजानं निर्विषं कर्तुम् तेनैव मार्गेण गच्छन्तं कश्यप-गोत्रोद्भवं मन्त्रसिद्धं कंचन ब्राह्मणं ददर्श। स ब्राह्मणः कथाप्रसङ्गेन "तक्षकेण दङ्क्ष्यमाणं राजानं निर्विषं कृत्वा तस्माद्धनं प्राप्तुं गच्छामि" इत्यवदत्। तच्छ्रुत्वा तक्षकस्तं द्विजम् "अहमेव स तक्षकः। यदि तव मद्दष्टस्य राज्ञ उज्जीवने शक्तिः स्यात्तर्हि इमं वृक्षं दशाम्येनमुज्जीवय" इत्युक्त्वा पुरतः स्थितं वटवृक्षमदशत् ।

तक्षकेन दष्टः सः वृक्षः, तत्स्थाः पक्षिणः, इन्धनाहरणाय तं वृक्षमारूढः कश्चन द्विजश्चेत्येते सर्वे भस्मीभूताः। स काश्यपो द्विजः आचम्य प्राणानायम्य प्रयतो भूत्वा सर्वमपि भस्म पुञ्जीकृत्य विषहरं मन्त्रं जजाप। जपमहिम्ना तद्भस्मराशेरणुर्न्यग्रोधाङ्कुरः समभूत्। ततः पर्णद्वयं, क्षुद्राः शाखाः, महाशाखाः, समग्रो विटपी, तत्स्थाः पक्षिणः तमाश्रिताः लताः, इन्धनापचायी स पुरुषश्च इत्येवं क्रमेण ते सर्वेऽपि समजीवन्।

स तक्षकस्तस्यान्यादृशीं मन्त्रशक्तिं दृष्ट्वा विस्मितस्तं ब्राह्मणमुवाच। "ब्राह्मण! तस्माद्राज्ञो यावद्धनं त्वं लप्स्यसे ततोऽपि अधिकं स्वापतेयं ते दास्यामि तद्गृहीत्वा निवर्तस्व गृहान्। मदीयं धनं निश्चितम्। राजकीयं तु संदिग्धम्। यदिष्टं तत्कुरु" इति। तच्छ्रुत्वा स काश्यपः दिव्यज्ञानेन तं राजानं क्षीणायुषं विज्ञाय तक्षकाद्वित्तं लब्ध्वा अपावर्तत। तक्षकोऽपि स्वसाहाय्यार्थमागतान् भुजङ्गमान् तापसरूपेण राजप्रासादं प्राहिणोत्। स्वयं च तैस्तापसैः राज्ञे उपायनत्वेन दातुं गृहीतेषु फलेषु एकस्मिन्बदरीफले सूक्ष्मकृमिरूपेण अतिष्ठत्। ते च तापसरूपिणः सर्पाः राज्ञे आशीर्वादं कृत्वा तद्धस्ते फलान्यददुः। ततः परीक्षिति एकस्मिन्फले कमप्यपूर्वम् कृमिं दृष्ट्वा "किमयमेव तक्षको भवेत्?। इति वितर्कयति सति स तक्षकः स्वीयं महान्तं रूपं गृहीत्वा भोगेन तमावेष्ट्य अदशत्। तथाभूतं तं राजानं दृष्ट्वा तत्र स्थिताः परिजनाः प्रदुद्रुवुः।

ततो जनमेजयः पितुरौर्ध्वदेहिकीं क्रियां चकार । तन्मन्त्रिणः काशीश्वरस्य सुवर्णवर्मणः पुत्रीं वपुष्टमां नाम जनमेजयेन विवाहयामासुः ।

अनया कथया ब्राह्मणापमानी क्षेमं न लभते इति, मंत्रस्य शक्तिरस्ति इति ज्ञायते ।

॥ परीक्षिच्चरित्रं संपूर्णम् ॥

---

## ॥ गजेन्द्रमोक्षः ॥

---

पूर्वम् पाण्ड्यदेशे इन्द्रद्युम्न इति ख्यातो विष्णुभक्तो राजा आसीत् । सः चिरं धर्मेण अवनिं प्रशास्य पुत्रे राज्यभारं निधाय वानप्रस्थाश्रमी मलयपर्वते अवसत् । सः तत्र कस्मिंश्चिद्दिने विष्णोः पूजां कुर्वन् ध्यानपर आसीत् । तेन पथा प्रस्थितः महायशा अगस्त्यऋषिः शिष्यैः सह तत्राजगाम । मौनी स राजा तं दृष्ट्वाऽपि देवपूजालोपभयात् तमृषिं नापूजयत् । क्रुद्धोऽगस्त्यः "यस्मात्त्वं मां प्रत्युत्थानादिकम् कृत्वा अवामनुथाः तस्मात्त्वं गजो भव" इति तं शशाप । तस्मादिन्द्रद्युम्नो गजेन्द्रो भूत्वा त्रिकूटनाम्नि पर्वतेऽभवत् । कदाचित्स गजेन्द्रो घर्मार्तोऽनेकाभिः करेणुभिः कलभैश्च सह जलं पातुं तत्रत्यं किंचन विपुलं सर अभ्यगात् । सपरिवारः स

तत्सरो विगाह्य जलं निकामं पपौ। शुण्डादण्डेन जलमुद्धृत्य करेणूः सिषिञ्चे। ताभिश्च स तथा सिक्तः। एवं तत्सरो लोडयन्तं गजेन्द्रं तत्र जलाशये स्थितो ग्राहः चरणे जग्राह।

आसीच्च हूहूर्नाम गन्धर्वराजः। सः अप्सरोभिः सह कस्मिंश्चित्सरसि जलक्रीडामकरोत्। तत्र देवलो नाम ऋषिः स्नातुं जलेऽवततार। हूहूस्तमृषिं पादयोः प्रगृह्य जले चकर्ष। स च कुपितो देवलो ग्राहो भवेति तमशपत्। स एव नक्रो भूत्वाऽस्मिन्सरसि स्थितः।

तेन गृहीतो गजेन्द्रः आत्मानं तस्मान्मोचयितुं बहुधा यतमानोऽपि न शशाक। करिण्यः कलभाश्च तमाकृष्यापि मोचयितुमशक्नुवन्तः पर्यदेवयन्। इत्थं सुदीर्घम् कालं ग्राह-गृहीतस्य निराहारस्य गजेन्द्रस्य बलक्षयो बभूव। यावद्बुद्धि प्रतीकारं कृत्वाऽप्यपारयन्गजेन्द्रः ईश्वरं शरणमगच्छत्। "स्थावरजङ्गमात्मकं एतज्जगत् येन सृष्टं तमादिमूलमीश्वरम् अहं शरणं गतः। स एव मां रक्षतु," इति सर्वेश्वरं प्रार्थयामास।

तस्य प्रार्थनां श्रुत्वाऽपि ब्रह्मादयो देवा यदा तं रक्षितुं नागच्छन् तदा श्रीनारायणः वैनतेयमारुह्य गजेन्द्रं त्रातु-मागच्छत्। करीन्द्रस्तं नारायणं दूरत एव दृष्ट्वा करे अम्बुज-मुत्पाट्य "नारायण! अखिलगुरो! भगवन्! नमस्ते" इति ननाम। श्रीहरिः चक्रायुधेन ग्राहं मुखे विपाट्य द्विपेन्द्रं मोचयामास। शापात् ग्राहत्वं प्राप्तो हूहूश्च स्वस्वरूपं प्राप्तः।

गजेन्द्रश्च भगवतः करस्पर्शेन निरस्तसमस्ताशुभो भगवतः सरूपो भूत्वा तस्य पार्षदो बभूव ।

तस्मादापद्यनन्यभावेन यः ईश्वरं शरणं गच्छति भगवां-स्तं असंशयं रक्षति ॥

॥ गजेन्द्रमोक्षम् संपूर्णम् ॥

---

## ॥ ध्रुवचरित्रम् ॥

---

बभूव ब्रह्मणः पुत्रः स्वायंभुवनामा मनुः। तस्य भार्या शतरूपा नाम। तयोः पुत्र उत्तानपाद इति। तस्य द्वे भार्ये आस्ताम्। तयोराद्या महानीतिमती सुनीतिः; यस्याः पुत्रो ध्रुवः। द्वितीयायाश्च रूपवत्याः सुरुचेः पुत्र उत्तमा नाम। तयोर्भार्ययोर्मध्ये द्वितीया राज्ञः प्रेयसी। एकदा सिंहासने उपविष्टो राजा कनीयस्याः पुत्रम् उत्तममङ्कमारोप्य लालयति स्म। तदा ध्रुवोऽपि तत्रागत्य पितुरङ्कमारोढुमैच्छत्। पार्श्वतः स्थिता सुरुचिः राज्ञि शृण्वति ईर्ष्यया ध्रुवमाह। "रे! मूढ! मम पुत्र एव नृपतेरङ्कमारोढुमर्हति। त्वं नार्हः। अयं तव मनोरथो दुर्लभः। ईश्वरमाराध्य मत्कुक्षौ अन्यास्मिन् जन्मनि यदि त्वं जनिष्यसि तदा आरोक्ष्यसि" इति। इत्थं सपत्नीमात्रा अवमानितो ध्रुवः पितुर्मुखमैक्षत। उत्तानपादः पुत्रं दृष्ट्वा साधु

असाधु वा किमपि नोवाच। ध्रुवः पञ्चहायनबालोऽपि आत्मानं तातेनाप्यनादृतं मत्वा अमर्षाद्रुदन् मातरमागच्छत्। स्वपुत्रस्य सापत्नमातृकृतं तिरस्कारं दासीमुखात् विज्ञाय सुनीतिर्विललाप। "वत्स! सापत्नमात्रे मा कुप्य। सत्यमेव तयोक्तम्। यतस्त्वं ममोदरे उत्पन्नस्तस्मात्पितुरुत्सङ्गमारोढु-मनर्ह एव त्वम्। भगवन्तं नारायणं आराधय। आराधितो लक्ष्मीपतिस्तव अत्युत्तमं पदं वितरेत्।" इति पुत्रमब्रवीत्।

ध्रुवो मातुर्वचनं निशम्य दुःखं नियम्य तपसे नगरात् वनं जगाम। मार्गे गच्छन्तं तं बालं नारद आगत्य शुभङ्करेण स्वकरेण मूर्ध्नि परपर्श। "वत्स! वनं मा गच्छ। तत्र बहूनि दुःखानि भवेयुः। भगवत आराधनं च दुष्करम्। सुरुच्या कृतमवमानं तितिक्षस्व। प्रतिनिवर्तस्व गृहम्" इति तमवदत्॥

"स्वामिन्! अहं क्षत्रियदायादः अतिकठिनं मम हृदयम्। सुरुच्या दुर्वचोबाणैः कृतच्छिद्रेऽपि मम हृदि भवतो वाक्यं पदं न लभते। यदि मय्यनुग्रहस्तर्हि त्रिभुवनेष्वपि उत्कृष्टं स्थानं साधयितुमिच्छोर्मम मार्गम् ब्रूहि" इति तं स बालोऽपृच्छत्। तच्छ्रुत्वा नारदः "तात! भगवतो वासुदेवस्य आराधनमेव क्षेमस्य पन्थाः। अस्ति यमुनायास्तटे मधुवनं नाम काननम्। तत्र नित्यं संनिहितो हरिः। गत्वा तत्र तपः कुरु। नित्यं कालत्रये कालिन्द्यां स्नाहि। भगवतो वासुदेवस्य मन्त्रं च जप। तेनैव मन्त्रेण भगवतः षोडश उपचारान् अर्पय।

सः शीघ्रमेव प्रीतः सन् तव वरान्यच्छेत् ।" इत्येनमुक्त्वा उत्तानपादस्य समीपमगात् ।

सुतं विवासय पश्चात्तपन्तं राजानमेत्य देवर्षिः "राजन्! तव बालः शीघ्रमेव कृतार्थ आगमिष्यति । तं माशुच" । इति सान्त्वयामास ।

बालश्च नारदस्य उपदेशानुसारेण तदेव मधुवनं प्राप्य वासुदेवमाराधयामास । सः प्रथमं त्रिरात्रान्ते त्रिरात्रान्ते कपित्थं बदरं वा अभुङ्क्त । ततः द्वितीये मासे षष्ठे षष्ठे दिने वृक्षात् शीर्णानि पर्णानि अश्नानः हरिं पूजयामास । तृतीये मासि नवमे नवमेऽहनि जलपानं केवलं कुर्वन् पुण्डरीकाक्षमाराधयन्। चतुर्थे मासि द्वादशे द्वादशेऽह्नि वायुभक्षणं कृत्वा देवं पूजितवान् । पञ्चमे मास्यनुप्राप्ते श्वासजयं कृत्वा एकेन पादेन स्थित्वा वासुदेवं दध्यौ । "अयमस्माकं स्थानानि अपहरिष्यति चेत्किं कर्तव्य (?" इति भीताः इन्द्रादयो देवाः सर्पैः गजैः सिंहैः पिशाचैश्च तं भीषयामासुः । भगवतः पादपद्मे एव बद्धचित्तस्य तस्य नैते दृष्टिगोचरा अभूवन् ।

यदा स बालः एकं पादं भूमौ निधायान्यं पादं उन्नमयति तदा मही गजेनाक्रान्ता तरीव पर्यायेणोभयोः पार्श्वयोर्ननाम । अस्य श्वासजयरूपतपः प्रभावेण सर्वे जनाः श्वसितुमपि नाशक्नन् । तेन खेदं प्राप्ता देवा देवदेवाय शार्ङ्गिणे ध्रुवतपसा समुत्पन्नं जगतः संकटं निवेदयामासुः । तच्छ्रुत्वा भगवान्

गरुत्मन्तमारुह्य मधुवने प्राणान्निरुध्य स्वहृदये नारायणं पश्य तस्तस्य ध्रुवस्य पुरतः तस्थौ। अनुपदं तस्य हृदि स्थितः तडित्प्रभो देवः तिरोहितो बभूव। तत्कारणं जिज्ञासमानः सः यदा नेत्रे उन्मील्य पुरतः पश्यति तदा तमेव देवं बहिःस्थितं ददर्श। तद्दर्शनेन पुलकाञ्चितगात्रः स राजसूनुः तं स्तोतुमिच्छन्नपि बाल्यात् साध्वसाच्च किमपि वक्तुं नशशाक। दण्डवत् केवलं प्रणतं तं बालं भगवानुत्थाप्य पाञ्चजन्याख्येन निजशङ्खेन कृपया कपोले पस्पर्श। सुनीतिपुत्रः अक्षमयस्य शङ्खस्य स्पर्शमात्रेण वेदादिसकलविद्यानां पारंगतो भूत्वा उपनिषत्सिद्धाभिः स्तुतिभिस्तं तुष्टाव ॥

तया स्तुत्या प्रसन्नो वासुदेवः "हे राजन्यपुत्र! जानामि ते अभिप्रायम्। सर्वेषां ग्रहाणां नक्षत्राणां च आधारभूतमस्ति ध्रुवाख्यं स्थानम्। तच्च सप्तर्षीणां स्थानादपि उपरिष्टाद्वर्तते। तस्याधिपत्यं तव दास्यामि। त्वं चिराय भुवि सर्वाणि सुखान्यनुभूय अन्ते तत्स्थानं प्राप्स्यसि" इत्युक्त्वा अन्तरधात् ॥

दुर्लभं वरं लब्ध्वा प्रतिनिवर्तमानं आत्मजमाकर्ण्य भार्याभ्यां, पुत्रेण उत्तमेन, पौरैश्च सह राजा तं प्रतिययौ। सुनीतिः सुरुचिश्च वैरं विहाय एकां शिबिकामारुह्य जग्मतुः। उपवनाभ्याशे पादचारिणमायान्तं ध्रुवं दृष्ट्वा राजा रथादवतीर्य दोर्भ्याम् परिषस्वजे। ध्रुवोऽपि जनकं जनन्यौ च अभ्यवादयत्।

ध्रुवः उत्तमश्च अन्योन्यमालिलिङ्गतुः। सुनीतिः चिरादृष्टं पुत्रमालिङ्ग्य परमां मुदं लेभे। सर्वे जनाश्च राज्ञीं सुनीतिं प्रशशंसुः। राजा ध्रुवं करिणीमारोप्य पुरं प्रावेशयत्। पत्तने सर्वेषां गृहद्वारेषु सवृन्ताः कदलीस्तम्भाः तथाविधाः पूगपोताः, चूतपल्लवाः, तोरणानि च आबद्धानि। वृद्धाः पुरस्त्रियः ध्रुवं सिद्धार्थैः पुष्पैः लाजैश्च हर्म्येभ्यः अवाकिरन्। विप्राः आशिषः प्रायुञ्जत। एवं महता संभ्रमेण ध्रुवः पुरीं प्रविश्य पितुर्भवनं प्राविशत्। सुनीतिश्च तदाऽऽरभ्य राज्ञः सुरुचेरपि प्रेयसी बभूव।

उत्तानपादः स्वपुत्रस्य भ्रमिं, इलां च विवाहयामास। भ्रम्यां कल्पो वत्सश्च पुत्रौ जातौ। इलायामुत्कलानाम पुत्रोऽजनि। नृपः पुत्रे प्रजानामनुरागं दृष्ट्वा तं राज्ये अभ्यषेचयत्।

य एवं परकृतमात्मनोऽपमानं सोढ्वा ईश्वरं शरणं गच्छेत् सः क्षेमं प्राप्नुयात्॥

॥ ध्रुवचरित्रम् संपूर्णम्॥

---

## ॥ अमृतमथनम्॥

---

असकृदसुरैः पराजिता इन्द्रप्रभृतयो देवाः ब्रह्मलोकं गत्वा स्वदुर्दशां तस्मै विज्ञापयामासुः। स च तैर्देवैः सह श्रीमते नारायणाय एतत् निवेदयितुं क्षीराब्धिं प्राप। आदि

पुरुषश्च तदैव योगनिद्राया बुबुधे। चतुर्मुखस्तं पुरुषसूक्तेन स्तुत्वा देवानामागमनकारणं निवेदयाञ्चक्रे। तच्छ्रुत्वा भगवानाह "भो ब्रह्मन्! शंभो! सर्वे च देवाः! शृणुत। क्षीरोदधौ मन्दरपर्वतं निधाय तं मन्थानं कृत्वा सर्पराजं वासुकिं च रज्जुं कृत्वा असुरैः सह सन्धिं विधाय तैः सह पयोब्धिं यूयं निर्मथ्नीत। चिरं फलादर्शनेऽपि अश्रद्धा तत्र न कर्तव्या। मध्ये कालकूटादिविघ्नाश्च भवेयुः। तेभ्यो न भेतव्यम्। बहोः कालादमृतमुत्पद्येत। मायया असुरान् वञ्चयित्वा तदहं युष्मान्पाययिष्यामि। ततो यूयं जरामरणरहिता भविष्यथ"। इति॥

इन्द्रादयो देवाः सत्यलोके ब्रह्माणं, कैलासे शिवं च विसृज्य त्रिविष्टपमगच्छन्। पुरंदरोऽपि दानवेन्द्रं बलिं प्राप्य दुग्धाब्धिमथनोदन्तमकथयत्। तत्कार्यम् वैरोचनेयोऽप्यरोचत। ते सर्वे देवा दानवाश्च मन्दरपर्वतमुत्पाट्य तं गरुडमारोप्यानीय दुग्धाब्धावक्षिपन्। देवास्तं पर्वतं वासुकिना संवेष्ट्य तस्य पुच्छभागमसुराणां विसृज्य स्वयं मुखभागे तस्थुः। असुरास्तु वासुकेः पुच्छममङ्गलं मत्वा मुखभागमेव जगृहुः। इत्थं कृतस्थानविभागाः उभयेऽपि कश्यपनन्दना मथितुमुपचक्रमिरे। असुरा वासुकेर्विषश्वासानिलहता मम्लुः॥

एवं महोदधौ मथ्यमाने भारातिशयान्मन्दरगिरिरधोऽगच्छत्। तदा नारायणः कच्छपस्य वपुः स्वीकृत्य तं गिरिं

स्वपृष्ठेनोद्धधार । बहुकालमथनेऽपि यदा सुधा नाजायत तदा देवा दानवाश्च भगवत्प्रीत्यर्थम् एकादश्यां उपवासं कृत्वा भगवन्तं समभ्यर्च्य द्वादश्यां व्रतपारणां च कृत्वा पुनर्मथितुमारब्धवन्तः । भगवान् स्वयं च ममन्थ । मथ्यमानादुदधेर्हालाहलाख्यं विषमुदभूत । तद्दृष्ट्वा भीता दैत्या देवाश्च प्रदुद्रुवुः ततो देवैः प्रार्थितो देवदेवो महादेवस्तद्विषं लोकहितार्थम् पातुकामः देव्या मुखमपश्यत् । भर्तुः प्रभावज्ञाऽम्बिका तदन्वमोदत। निगीर्यमाणं तद्विषं ईश्वरेऽपि स्ववीर्यम् किंचित् दर्शयामास । तेन तस्य गले नीलिमाऽभूत् । तदपि नैल्यं तस्य महतो देवस्य विभूषणमेव भवति । तदारभ्य तस्य नीलकण्ठ इति नाम च समभूत् ।

ततः कामधेनुः, कल्पवृक्षः, पारिजातः, ऐरावताख्यो गजः, उच्चैःश्रवानाम हयश्चेत्येतानि श्रेष्ठानि वस्तूनि उदधेर्जज्ञिरे । इन्द्रस्तानि जगृहे । अभूच्च ततः कौस्तुभाख्यं रत्नम् । तद्विष्णोर्वक्षः श्रितम् । ततो लक्ष्मीः करधृतपद्मा आविरासीत् । ब्रह्मादयो देवास्तां जगन्मातरं पूजयामासुः । दिग्गजास्तां पूर्णकलशैः स्नपयांचक्रुः । प्रजापतयस्तां सूक्तवाक्यैरस्तुवन् । अष्टौ दिक्पालास्तस्यै वस्त्राणि, भूषणानि च ददुः । केचित्तां भर्तारमभिलषन्तीं मत्वा भार्यात्वे प्रार्थयामासुः । मङ्गलदेवता तु तान्सर्वान्दोषिणो विज्ञाय निर्दोषं परानपेक्षं नारायणं भर्तारं वव्रे । तयोर्लक्ष्मीनारायणयोर्विवाहमहोत्सवे सर्वेऽपि परमामेव मुदं लेभिरे ॥

ततोऽमृतपूर्णम् हाटकमयं कलशं हस्ते धृत्वा हरेरंशः स्मरणमात्रेण सर्वरोगपरिहारको धन्वन्तरिः क्षीरोदधेरुदतिष्ठत्। दैत्यास्तं सुधाकलशं प्रसह्यापजह्रुः। दैत्येषु दोषमारोपयितुं स्वयमशक्तइव तान्समुपैक्षत। ततोऽसुरेष्वेव परस्परं "ममेदं ममेदं, न तव" इति विवादः समजनि। तदा तेषां वञ्चनार्थं भगवान्परमाद्भुतेन योषिद्रूपेण प्रादुरासीत्। तस्या मोहिन्या अनिर्देश्यं रूपं दृष्ट्वा मोहिताः दैत्याः 'अस्माकमिमां सुधां त्वं विभजस्व' इति तस्या हस्ते सुधाकलशं ददुः। तमादाय सा "स्त्रियं मां न विश्वसित। अथवा मयैवैतत् विभजनीयमिति भवतां यदि मतं, तर्हि यथा मम मनः प्रवर्तेत तथैव विभजेयम्। अहं तु युवतिरेकाकिनी च कथमनेकेषां भवतां दृष्टिपथे स्थित्वा परिवेविषाणि? तस्मात्सर्वैर्नेत्रमीलनं कर्तव्यम्। यद्येतत्सर्वम् भवद्भिरभ्युपेयते, तर्हि विभजामि"। इत्यवादीत्॥

दैत्याश्च तद्रूपमोहितास्तथेति अङ्गीचक्रुः। सा मोहिनी देवानामसुराणां च पङ्क्तीः पृथक्कल्पयित्वा तत्र तत्र तांस्तानुपवेश्य निमीलितनयनानामसुराणां पङ्क्तिषु केवलं नूपुरशब्दं दर्वीशब्दं च कुर्वाणा देवानेव सुधामपाययत्। ततो देवाः अमृतपानेन जरामरणवर्जिता बलिनश्चाभूवन्। ततस्ते असुरैः सह युद्ध्वा ताञ्जित्वा देवराज्यं निष्कण्टकमन्वभूवन्॥

॥ अमृतमथनं संपूर्णम् ॥

---

## ॥ पार्वतीपरमेश्वरौ ॥

अस्त्युत्तरस्यां दिशि कैलासो नाम नगाधिराजः । तत्र वेदस्वरूपो वटवृक्षोऽस्ति। तस्याधस्तात् रत्नमय्यां वेद्यां देवगणैरुपास्यमानो नारदादिभ्यः शिष्येभ्यो विद्याः प्रब्रुवन्, स्मरणमात्रेण सकलविद्याप्रदया उमया च सहितः सुकृतिनां परं शंकरः सदाशिवः सदा संनिहितो वर्तते ।

येयमिह जन्मनि पार्वती सा पूर्वजन्मनि प्रजापतेर्दक्षस्य पुत्री सतीनाम्नी आसीत्। पितृकृतां स्वभर्तुरवज्ञामसहमाना सा योगधारणया देहं तत्याज। स्वायंभुवमनुपुत्री प्रसूतिर्नाम तस्या माता, पिता दक्षश्च पुत्र्या देहत्यागं दृष्ट्वा पश्चादतप्येताम्। आत्मानं चागर्हेताम् ।

सती पुनः ईशानं सर्वविद्यानां ईश्वरं सर्वभूतानां तमेव महादेवं पतिं लभेयेति हिमवतो भार्यायां मेनायाम् अजायत । ततः सा पर्वतस्य पुत्रीति नाम्ना पार्वती बभूव। सा च महादेवमेवोद्दिश्य तपश्चचार। पर्णाशनमपि त्यक्त्वा दुस्सहं तपः कुर्वतीं तां माता "उ! मा" इति निवारयामास। तस्मात्तस्याः "अपर्णा, उमा" इति च नाम्नी अभवताम् ।

इत्थं तपसा स्वमाराधयन्तीं तां अनन्यशरणां ज्ञात्वा भवो वृषभारूढस्तदन्तिकमाजगाम । तया प्रार्थितस्तां च परिणिनाय ॥

## ॥ गणेशः ॥

---

तस्यां पार्वत्यामेकः पुत्रो जातः। माता कदाचित्तं बालम् "अन्तर्न कमपि प्रवेशय" इत्युक्त्वा तं द्वारि निधाय गृहस्यान्तः स्नातुं प्रवृत्ता। अत्रान्तरे आगतं पितरमपि स न्यवारयत्। कुपितो देवस्तस्य शिरो न्यकृन्तत्।

तत उमया प्रसादितो हरः "उत्तरदिशि शिरः कृत्वा स्वपतो यस्य कस्यापि शिर उत्कृत्य आनयत" इति पार्षदानादिदेश। ते च रात्रौ सर्वत्राटित्वाऽपि तादृशं कमपि पुरुषमलभमानाः तथा शयितं कंचन गजं दृष्ट्वा तस्य सशुण्डं शिरश्छित्त्वा आनिन्युः।

भगवांश्च तच्छिरः संधाय पुत्रमुज्जीवयामास। ततः प्रभृति तस्य कुमारस्य "गजानन" इति नामाऽभूत्। भक्तानां विघ्नपरिहारकः सः "विघ्नेश्वर" इति, सर्वपार्षदगणाधिपस्सन् "गणेश" इत्यादीन्यनेकानि नामानि भेजे ॥

---

## ॥ सुब्रह्मण्यः ॥

---

अथाऽसकृदसुरपराजितैर्देवैः प्रार्थितो हरः उमायां द्वितीयं पुत्रं जनयामास। ब्राह्मणप्रियस्य तस्य "सुब्रह्मण्यः"

इति नाम चक्रे पिता । तस्य भार्या देवसेना नाम । तं देवाः सेनान्यं कृत्वा तारकादीन् असुरानजयन् ।

यः परमेश्वरे भक्तिमान् स सर्वा विद्याः अनायासेन लभते । एवं मङ्गलाम्बिकायाः प्रसादाच्च सर्वाणि मङ्गलानि भक्ताः प्राप्नुवन्ति ॥

गणपतेरनुग्रहात् भक्तानां सर्वेऽपि विघ्ना नश्यन्ति ॥
सुब्रह्मण्यं स्मरतां सर्वा आपदो निवर्तन्ते । तन्मन्त्रं जपतां न कदाचिदपि पिशाचादिपीडा भवति ॥

---

## ॥ हनुमान् ॥

---

पुरा त्रेतायुगे सुमेरुनाम्नि पर्वते केसरिनामा वानरः उवास। तस्य भार्या अतीव रूपवती अञ्जना। तस्यां जगत्प्राणः वायुः स्वयं रामसेवार्थम् हनुमद्रूपेण अवततार। तस्य महिमा वर्णयितुमशक्यः। प्रसवानुपदं फलान्याहर्तुम् गतायामञ्जनायां क्षुधितः स शिशुः तत्क्षणोदितं भगवन्तं सूर्यम् दृष्ट्वा खाद्यं फलं मन्वानो गगनमुत्पपात ॥

गरुडात्, वायोः, मनसश्च अधिकतमं हनुमतो वेगं दृष्ट्वा देवा दानवाश्च विस्मिता बभूवुः। आदित्यः आत्मानं खादितुमागतं ज्ञात्वाऽपि तं शिशुं न ददाह। तस्मिन्नेव दिने भास्करं

ग्रसितुमागतो राहुर्वानरं दृष्ट्वा भीतस्सन् पुरंदरं विज्ञापयामास। शचीपतिः कुलिशायुधमुद्यम्य ऐरावतमारुह्य मारुतिमभिययौ। आञ्जनेयश्च चतुर्दन्तं तं श्वेतं दन्तिनं "इदमन्यत्सुभोज्यं" इति मत्वा आदित्यं परित्यज्य सेन्द्रं तमैरावतमभिससार। तस्माद्भीतः पाकशासनः आत्मरक्षणार्थम् तं वज्रेणाताडयत्। तेन ताडनेन विह्वलाङ्गः स बालः योजनानां सहस्रादधः तस्मिन्नेव सुमेरौ पर्वते अक्षताङ्गः पपात। परं तु तेन कुलिशायुध प्रहारेण तस्य वामा हनुः किञ्चिदिव भुग्नाऽभूत्। तदपि तस्य कपिश्रेष्ठस्य पराक्रमचिह्नमभूत्। तस्मादेव तस्य हनुमानिति नाम पप्रथे॥

एतावतैव कुपितः प्रभञ्जनः पुत्रं गृहीत्वा सर्वत्र व्याप्त-मात्मानम् उपसंहृत्य सुमेरुगुहायां निलीनो बभूव। प्राणिनां जीवनमुख्यहेतोर्वायोः संचाराभावात् त्रिलोकीगताः सर्वेऽपि प्राणिनो निरुच्छ्वासाः पीड्यमानाः ब्रह्माणं शरणमगच्छन्। चतुर्मुखोऽपि रुद्रेन्द्रादिभिर्देवैः सह तामेव सुमेरुगुहां प्राप्य वायुमनुनीय हनुमते दुर्लभान्वरानयच्छत्। ततः वायोः प्रसादेन सर्वेऽपि प्राणिनः सुखिनो बभूवुः। आञ्जनेयोऽयं प्रत्यहम् उदयाद्रिमारभ्य चरमाद्रिपर्यन्तं सूर्याभिमुखो भूत्वा पृष्ठतो व्रजन् विवस्वतः सकाशात् नव व्याकरणानि, चतुर्दश विद्याः, चतुः षष्टिं कलाश्च अधिजगे॥

अत्रान्तरे सः सूर्यपुत्रस्य सुग्रीवस्य सचिवो भूत्वा तेन सह ऋश्यमूके पर्वतेऽवसत्। रावणेनापहृतां सीतां विचेतु तत्रागतेन सलक्ष्मणेन श्रीरामेण सह सुग्रीवस्य सख्यं कारयामास। सुग्रीवोऽपि दाशरथेः प्रसादात्कपिराज्यं प्राप। सीतां मार्गयन् समुद्रं तीर्त्वा लङ्कां गतो हनुमान् तत्र देव्यै रामाङ्गुलीयकं दत्वा तस्याः सकाशात् चूडामणिं गृहीत्वा अक्षकुमारादीन् राक्षसान् हत्वा लङ्कां ददाह। पुनः रामान्तिकमागत्य तस्मै चूडामणिं अर्पयित्वा सीतायाः कुशलोदन्तकथनेन तमतोषयत्।

ततः काकुत्स्थः दक्षिणसमुद्रे सेतुं बद्ध्वा तेन मार्गेण लङ्कां गत्वा आञ्जनेयादीनां साहाय्येन रावणं जघान। सीतां पुष्पके विमाने प्रतिष्ठाप्य सर्वैः सहाऽयोध्यामगच्छत्। श्रीरामस्य राज्याभिषेकानन्तरं सीता हनुमतः प्रत्युपकारं कर्तुमजानती मुक्ताहारं स्वकण्ठादुन्मुच्य तत्कण्ठे मुमोच। श्रीरामभद्रोऽपि प्रसादातिशयात्तमालिंग्य तस्य आगामिनि ब्रह्मकल्पे ब्रह्मपदवीमयच्छत्॥

स्वामिभक्तौ ब्रह्मचर्ये धैर्ये शौर्ये सत्यवचने च हनुमतः सदृशः कश्चिदपि त्रिभुवनेऽपि नास्ति। तन्नामस्मरणस्यापि महाफलमुक्तं वाल्मीकिना॥

बुद्धिर्बलं यशो धैर्यम् निर्भयत्वमरोगता।
अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत्, इति॥

॥ तृतीयपाठः संपूर्णः ॥ ३ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवे पञ्चमः सर्गः ॥ ५ ॥

---

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥
इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥
निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥
मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥४॥
इति ध्रुवेच्छामनुशासती सतां शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥
कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥
अथाऽनुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत् ॥
विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥८॥
यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥९॥

प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
अकारि तत्पूर्वनिबद्धया तया सरागमस्या रशनागुणास्पदम् ॥

विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताश्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥

महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥

पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणाङ्गनासु च ॥

अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥

अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥

विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥

यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम्
तदाऽनपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥

क्लमं ययौ कन्दुकलीलयाऽपि या तया मुनीनां चरितं व्यगाह्यत।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ॥

शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥

तथाऽतितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैःशनैः श्यामिकया कृतं पदम्॥

अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः।
बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः॥

निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा।
तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः॥

शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपः साक्ष्य इव स्थिताः क्षपाः

निनाय साऽत्यन्तहिमोत्किरानिलाः सहस्यरात्रिरुदवासतत्परा।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती॥

मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना।
तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥ २७॥

स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः॥

मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा॥

[सुरास्तदुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शम्भुवशक्रियाक्षमम् ।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं चमूनां सुतमाजिहेतवे]॥*

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥

तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥

विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥

अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥

अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥

विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥

अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भामिनि ! ।
त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥

प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥

अतोऽत्र किञ्चिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चद्रेहस्यं प्रतिवक्तुमर्हसि ॥

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपः फलं स्यात्किमतः परं वद ॥

भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि! त्वयि ॥

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु! कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥

निवेदितं निश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥

अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते।
उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः ॥

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥

अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥

कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।
तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥५१॥

सखी तदीया तमुवाच वर्णिनं निबोध साधो! तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपः साधनमेतया वपुः ॥

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यम् मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति॥

असह्यहुंकारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।
इमांहृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥५४॥

तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥

उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥

त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क नीलकण्ठ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबंधना ॥

यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥

यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः

न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥

अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥६२॥

अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम्।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥

यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥६४॥

अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥

अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥

त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥

चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥

अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥

इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

वपुर्विरूपाक्षमलक्षिता जनिर्दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥

अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥

विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥७८॥

तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम्
असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणांगुली ॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारण कथं स लक्ष्यप्रभवो भविष्यति ॥
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥
निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥
इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५॥
अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लमसुत्ससर्ज क्लेशः
फलेनहि पुनर्नवतां विधत्ते ॥८६॥
॥ इति कुमारसंभवे पञ्चमः सर्गः ॥ ५ ॥

---

Printed at the Sri Vidya Press, Kumbakonam—July '48.

## ॥ शुद्धि पत्रम ॥

| पृ. | पं. | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | 9 | दौहित्रा | दौहित्र |
| ,, | 13 | भवान्य | भवान्या |
| २ | 6 | सेवं | सर्वम् |
| ३ | 13 | ह्रिष्यामि | यिष्यामि |
| ४ | 14 | णाना | णानां |
| ,, | 21 | ब्रायणाः | ब्राह्मणाः |
| ५ | 6 | गोष्ट्रे | गोष्ठे |
| ७ | 9 | सोऽपि | साऽपि |
| ,, | 20 | इत्युत्त्वा | इत्युक्त्वा |
| ९ | 4 | मुहूर्तं | मूहूर्तम् |
| ,, | 17 | बंर्हं | बर्हम् |
| १० | 6 | र्यांथं | यार्थम् |
| ,, | 11 | गताय | गमताय |

| | | | |
|---|---|---|---|
| १० | 17 | षष्णो | षण्णो |
| १३ | 21 | स्तार्थि | स्तीर्थ |
| १५ | 22 | उद्याने | रुद्याने |
| १९ | 2 | सूर्ये | सूर्यो |
| ,, | 21 | त | तं |
| २० | 4 | भक्षं | भैक्षं |
| ,, | 17 | पाण्डय | पाण्ड्यः |
| २६ | 2 | दानः | दानैः |
| २७ | 7 | दमघा | दमघो |
| ३२ | 5 | अनके | अनेक |
| ३८ | 7 | श्लाक | श्लोक |
| ४४ | 15 | सैम्यः | सैन्यैः |
| ४५ | 13 | कण्ठ | कण्ठे |
| ४९ | 22 | व्याल | बाल |
| ५६ | 6 | शाखा | शाखा |
| ६७ | 16 | त्यास्त्वा | त्याक्त्वा |